अन्तःस्थित गुण के रूप में चिन्तित मूलदेवता को बहिश्चक्र में स्थापित करने के लिए स्थूलोपासना का विधान दसवें मन्त्र में है। ग्यारहवें मन्त्र में कामकला का ध्यान कहा गया है जिसके विषय में पर्याप्त चर्चा कर दी गयी है। बहिर्यागीय पञ्च द्रव्यों का उपदेश बाहरवें मन्त्र में है तथा देवता के सगुण रूप का ध्यान तेरहों मन्त्र में है। कामेश्वर और कामेश्वरी त्रिपुरा के समप्राधान्य का कथन चौदहवें मन्त्र में है। शक्ति और शक्तिमान् का तादात्म्य इससे द्योतित होता है। अन्त में फलोत्पादनप्रणालीकथनपूर्वक उपासना के चरम लक्ष्य को कहा गया है। अन्तःकरण के द्वारा जीव की जायमान संकोचावस्था जब समाप्त हो जाती है तब वह स्वान्तर्यामिपरमात्मदृष्टि हो जाता है। जीवात्मा वस्तुतः अपने अन्तर्यामी आत्मा से अलग जीवात्मदृष्टि नहीं रहता। वह विश्वरूप अर्थात् विश्वशरीरक ब्रह्म को निजात्मरूप से समझने लगता है, यह अभिप्राय है। इस तरह इस उपनिषद् में निःश्रेयसोपयोगिनी सकल सामग्री सन्निहित सिद्ध हो जाती है। याथातथ्यतः प्रणाली को श्रीभगवत्कृपाप्रयुक्तगुरूसक्तिद्वारा सतत अनुचिन्तन से ही समझा जा सकता है। इति शिवम्।

विदुषां वशंवदः
**कमलाकान्त त्रिपाठी**



# सम्पादकीयम्

उमासहायं विश्वेशं ससुतं स्फीतविग्रहम् ।
मायाबन्धाद् विमोक्षाय प्रणमामि मुहुर्मुहुः ।।१।।

अज्ञानतिमिरध्वंसकौतूहलसमन्विताम् ।
प्रज्ञासंवर्धनोद्विग्नां वन्दे गुरुपदद्वयीम् ।।२।।

अथेयं भाष्यद्वयोपेता त्रिपुरोपनिषद् विपश्चिज्जनप्रमोदाय विशेषतः श्रीभास्कररायकृतभाष्यनिगूढाकूतप्रकटीकरणचातुरीसनाथभाषाव्याख्यानभूषिता भूषितौघत्रयीव प्राकाश्यमुपनीयत इति परिनिर्वृतं मदीयं स्वान्तम्। प्रमाणान्तरानवगतमर्थमवबोधयदिह शास्त्रं नः प्रमाणं भवति। श्रुतिस्तत्तत्फलोद्देश्यकानि कर्माणि विदधती तानि धर्मपदवाच्यतां नयति। वेदबोधितेष्टसाधनकत्वस्यैव धर्मत्वात्। अस्यामुपनषदि भगवत्यास्त्रिपुराया उपासनं सप्रकारं विशेषतोऽपवर्गफलाय प्रतिपाद्यत इति धर्मप्रतिपादिकैव सा। उपासनाय चोपास्यस्वरूपपरिज्ञानमप्यपेक्ष्यत इति परदेवताया महिमानमावेदयन् निगम आगमश्च वास्तविकमपेक्षितञ्च तत्स्वरूपमेव प्रतिपादयति। तद्वेदनञ्च नर्तेऽपेक्षितसामर्थ्यात् संभवति। अपेक्षितस्य योग्यतारूपस्य सामर्थ्यस्यैव सम्पादनाय सर्वाणि विद्यास्थानानि शास्त्रपदवाच्यानि विलसन्ति। प्राक्तनजन्मसमुपार्जितपुण्यवैभवोऽप्युचितं परदेवतोपासनानुगुणञ्च कुलस्वभावजातं प्रयच्छति येन ना विषयपराङ्मुखो भूत्वा निदिध्यासन-वर्त्मनि प्रवणायमानमना भवति। अन्यथा विषयेषु सीदन्मनः कथं शिष्टजनक्षुण्णे मार्गे प्रवर्तेत? प्रवर्तेत च विविधानर्थसंपृक्तेषु कुमार्गबहुलेषु विषयव्रातेषु। भूयांसो हि जना विषयरसगवेषणव्यापृतधियो भवन्ति। विदाङ्कुर्वन्तु प्रथमन्तावत् संस्कृतवाङ्मयसमृद्धिं निःश्रेयसायैव विकसत्सुप्रसाराम्। स्वकीयालौकिकच्छायासम्भृता निगमाः सन्ति सहस्रशः शाखासु प्रविभक्ता मन्त्रब्राह्मणोभयसमाख्याभूषितकलेवराः साङ्गाः सरहस्या यदर्थनिश्चयाय च नैकमनीषिप्रज्ञाप्रसूतभाष्यव्याख्यानपल्लवितकुसुमित-फलितविग्रहा मीमांसाद्वयी। तेषामेव संरक्षणायाऽऽन्वीक्षिकी न्यायविद्या योगशास्त्रं सांख्यञ्च। सम्भवद्वेदमूलका एव षट्त्रिंशदृषिप्रोक्ताः स्मृतिनामानो धर्मशास्त्रनिचया

यथायथं मनीषिव्याख्यानोपबृंहिताश्च सन्ति येषु लोकतन्त्रपोषका वैपरीत्यमादधति। अष्टादश पुराणानि चोपपुराणानि रामायणं महाभारतञ्च शिवदिप्रोक्ता आगमा अपि सन्ति सहस्रशः। सकलधर्मशास्त्रेषु विप्रतिपत्ति-निरासाय पदवाक्यप्रमाणज्ञैराप्तपुरुषैर्विरचिता निबन्धग्रन्थाश्च विलोक्यन्ते चतुर्वर्गचिन्तामणिपराशरमाधववीरमित्रोदयकालमाधवनिर्णयसिन्धुधर्मसिन्धुभगवन्त-भास्करकृत्यसमुच्चयकृत्यामृतमदनरत्ननवरात्रप्रदीपप्रभृतयो याँश्च शिरसा गृह्णन्ति मनीषिणः। पूर्वोत्तरमीमांसयोः प्रस्थानभेदोऽपि नैकविधः। पूर्वतन्त्रे भाट्टप्राभाकरनामभ्यां सह श्रीमुरारिमिश्रस्य तृतीयः पन्थाः। अत्र व्याख्यानोप-व्याख्यानबाहुल्यम्। भाट्टप्रस्थानेऽपि सोमेश्वरसूरिपार्थसारथिमिश्रकृत-प्रस्थानभेदः। अत्र मण्डनमिश्रसुचरितमिश्रभवदेवखण्डदेवप्रभृतीनां स्पृहणीया ग्रन्थाश्चकासति विदुषां मनांस्यावर्जयन्ति च। प्राभाकरमध्वानं समाश्रित्य शालिकनाथभवनाथमिश्रप्रभृतयो नैकानि ग्रन्थरत्नानि व्यरीरचन्। परःशता प्रकरणग्रन्था अत्र सन्ति। उत्तरमीमांसायां वेदान्ताभिधानायामपि प्रस्थानभेदा अनेके सन्ति। शाङ्करप्रस्थानेऽपि विवरणादिप्रस्थानभेदो यत्र बहवो ग्रन्था मनीषिणां विराजन्ति। शारीरकसूत्राण्यधिकृत्य श्रीमद्भगवद्रामानुजवल्लभा-चार्यनिम्बार्कमध्वप्रभृतिभिराचार्यैं र्भाष्याणि कृतानि यत्रानेकानि व्याख्यानोप-व्याख्यानानि सन्ति विदुषां व्युत्पत्तिविकासाय मनःसमाधानाय च। श्रीमता साक्षाद्भगवता गीतां गीतामेव विलोकयन्तु यत्र व्युत्पत्तिशालीनि मान्यानां श्रीभगवत्कल्पानामाचार्याणां भाष्याणि तदुपरि च तथाविधानामेव सुमनसां टीकाप्रटीकाप्रभृतयो ग्रन्थाः सन्ति। सत्स्वपि तत्र तथाविधेषु स्पृहणीय-व्याख्यानेषु शास्त्रपरिचयविधुराणां मूर्खाणां चेतास्याक्रष्टुं क्षुद्र-जनानामपि भाषासुच्छर्दिता अभिप्रायशून्या व्याख्यानाभासा अपि शिष्टजनमनःक्षोभं वितन्वन्ति। सर्वं सम्भाव्यते ह्यत्र लोकतन्त्रे। यत्र वेदेऽपि सत्स्वपि सायणोव्वटमहीधरादिविपश्चित्तल्लजव्याख्यानेषु क्षुद्राणामपि भाषायामुप-निबद्धा भाष्याभासा वर्षासु भेका इव केवलं मनःक्षोभाय विलोक्यन्ते। तान्येव वस्तुतो भाष्याणीति भ्रमो भूयिष्ठकल्पानां मा भूदिति धर्मसम्राट्पदवी-समलङ्कृताः स्वामिवर्याः सकलयतिवृन्दचूडामणयः श्रीमत्कर-पात्रपदप्रवाला वेदार्थपारिजाताभिधं महाग्रन्थमेव यजुर्वेदभूमिकाव्याजेन व्यरीचरन् यं विलोक्य समे शिष्टा मन्त्रमुग्धा इव दरीदृश्यन्ते। सर्वेषां पाश्चात्यानां विशेषतः श्रीदयानन्दस्य भाष्यं तत्र टङ्कितं मतजातञ्च शब्दानारूढं वेदसमुद्भूतैरेव तर्कैस्तथा विखण्डितं श्रीस्वामिपादैर्यथा भ्रमभूधरः प्रक्षोद इव

विशीर्णतामुपगतः। सहृदयहृदयेषु च तैस्तदीयग्रन्थाभासतुच्छताऽपि प्रकटिता। खण्डनं कथं भवतीति खण्डनग्रन्थं श्रीहर्षप्रणीतं विलोकयन्ति सुधियः किन्तु याथातथ्यतःखण्डनप्रकारान् वेदार्थपारिजातादेव जानन्ति। साम्प्रतं युगे मन्ये मत्स्यावतारोऽपर इव करपात्ररूपेण साक्षान्नारायण एव वेदानुदधरदिति। वेदान्यथाकरणव्याजेन सनातनधर्मविदूषकहृदयेषु दीर्घशङ्कुर्निखातस्तै र्योऽद्यापि न बहिर्निःसरति। श्रीविद्यामधिकृत्य यत् कार्यं व्यधायि तैस्तेनाधमर्ण एव सकलोपासकलोकः। एवंविधमहापुरुषपदसरोजयोः परःसहस्रप्रणतयो नः सन्ति। विद्यास्थानेषु ये सदाचाराः सन्ति तानेव कवयः स्वप्रतिभया वैलक्षण्येन सहृदयहृदयप्रतिष्ठितेषु काव्यरत्नेषु टङ्कन्ते। सन्ति चात्र श्रीवाल्मीकि-व्यासव्यतिरिक्ता अपि कालिदासबाणभट्टभारविभासमाघप्रभृतयः महाकवयो लोकोत्तरवर्णनानिपुणा येषां काव्यानि त्रैलोक्यं विभूषयन्ति। काव्यतत्त्वगवेषका आनन्दवर्धनाभिनवगुप्तमम्मटभट्टसदृक्षाः सुमनसः सन्ति ये कीर्तिख्यापन-प्रवणाभिः कृतिभिर्भारतराष्ट्रस्य गौरवं विवर्धयन्ति। एवं महासमृद्धं नो वाङ्मयं कति पठन्ति पाठयन्ति च? सर्वस्यैव पूर्वोक्तस्य वाङ्मयस्य तदुपगामिनो भाषानिबद्धस्य सहस्रगीतिश्रीरामचरितमानसादेश्च निःश्रेयसोपायभूतासूपा-सनास्वेव साद्गुण्याधायकत्वम्, न तु लौकिकक्षुद्रस्वार्थपरिबृंहणविधायित्वम्। सर्वेष्वेतेषु सुसंस्कृतवाङ्मयेषु लौकिकभौतिकपदार्थान्वेषणं कस्तूरीमृगप्रायवने श्रृगालगवेषणमिव प्रतिभाति।

वैदिकीमेवापासनामुपास्यस्वरूपञ्चागमाः स्मृत्यधिकरणन्यायेन विस्तरशः प्रतिपादयन्ति। श्रुतिमूलकत्मेवागमानां प्रामाण्यमिति नयविदः। साम्ब-पञ्चाशिकास्पन्दकारिकादुर्वासस्तोत्रजातविरूपाक्षपञ्चाशिकासांख्यकारिकाप्रभृतयो ग्रन्था अपि श्रुतिमूलाः प्रामाणिकत्वेन स्वीक्रियन्ते। अनेकासु वेदशाखासु विप्रकीर्णानिवार्थान् भगवाञ्जामदग्न्यः कल्पसूत्ररूपेणाविर्भावायाञ्चकार। अन्येष्वपि तन्त्रग्रन्थेषु श्रुतिमूला एवेतिकर्तव्यतानिचया विराजन्ति। इयं प्रकाशनीयोपनिषदपि तेषां ग्रन्थानां मूलत्वेन विभातीति श्रीभास्करराय: स्वीयव्याख्याने व्यनक्ति। सर्वविद्याविद्योतितस्वान्ताः परदेवतोपास्ति-परप्रकाशितप्रत्यगात्मतत्त्वाः श्रीभास्कररायपादाः कियत् पाण्डित्यं तन्त्राध्वनि विदधतीति तदीयाः स्पृहणीयाः कृतय एव कथयन्ति। स्वकीयव्याख्याने ते पूर्वोत्तरमीमांसागतन्यायसंचारणकुशलाः सन्ति। अस्फुटा पदार्था न्यायबलेन सुस्फुटा भवन्तीति निबन्धकर्तारो न्यायसंचारपुरःसरं व्याख्यान्ति व्याख्यातव्यान् विषयान्। श्रीमाधवाचार्यकमलाकरभट्टानन्तभट्टविज्ञानभिक्षु-

प्रभृतयो विपश्चितः प्रायेणाऽत्र परिगण्यन्ते। श्रीमन्तो भास्कररायाअपि तेषु मध्ये निविष्टा दरीदृश्यन्ते सर्वज्ञकल्पा इव प्रतीयन्ते च। यद्यप्यस्यामुपनिषदि श्रीरामानन्दतीर्थपादानां नानाश्रौतरहस्यप्रकाशकं भाष्यमपि प्राकाश्यमानीयते यस्य लाभं विशेषतो व्युत्पत्तिमन्तो ग्रहीष्यन्ति। मन्ये सकलरहस्यजातं निहितं तत्र समस्तीति। मीमांसान्यायसञ्चारपद्धत्या श्रीभास्कररायाणां भाष्यमस्तीति तत्स्फोरणाय पण्डितप्रवरश्रीकमलाकान्तत्रिपाठिमहोदयैस्तत्र भाषायां संवलितं व्याख्यानं व्याधायि। नूनं तदीयश्लाघनीयप्रयासेन जिज्ञासूनामुपकारो भावीति विश्वसिम्यहम्। देवताविग्रहादिस्वीकारेण तदीयप्रसादेन फलप्राप्तिरिति राद्धान्तयत्युत्तरतन्त्रम्। चक्राधिराजोपासनमस्यामुपनिषदि व्यक्तं परमफलावाप्तिसाधनत्वेन। परमधर्मत्वं तस्य तेन प्रतीयते।

श्रीललितासहस्रनामफलश्रुतावयं श्लोको वदति प्रसादमेव श्रीभगवत्याः—

**'सद्यः प्रासादं कुरुते तत्र सिंहासनेश्वरी ।**
**चक्राधिराजमभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ।।**

**जपान्ते कीर्तयेन्नित्यमिदं नाम सहस्रकम् ।**
**जपपूजाद्यशक्तोऽपि पठेन्नामसहस्रकम् ।।** इति।

अत्र श्रीभास्कररायो यावज्जीववाक्येन प्राप्तस्य कालसामान्यस्य कालविशेष उपसंहारवाक्यममन्यत। सामान्यविधिरस्पष्टः सन् विशेषविधिनोपसंह्रियत इति सिद्धान्तः। यथा—'पुरोडाशं चतुर्धा करोति' इति विधिना सामान्यतः प्राप्तस्य परोडाशचतुर्धाकरणस्य 'आग्नेयं चतुर्धाकरोति' इत्यनेन पुरोडाशविशेषरूपाग्नेय उपसंहारो भवति। चक्राधिराजपूजनं कृत्वा नित्यत्वेन प्राप्तस्यात्रैवोपनिषदि प्रतिपादितस्य पञ्चदशाक्षरीमन्त्रस्य जपं विधाय चान्ते सहस्रनाम्नां सङ्कीर्तनं विधेयमिति वचनव्यक्तिर्निष्पद्यते। यद्येवं तर्हि 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति वाक्येन बृहस्पतिसवस्य वाजपेयेन यथाऽङ्गाङ्गित्वमङ्गीकृतं प्रकरणपाठात् तथैव कीर्तनं श्रीचक्रपूजनस्याङ्गं भवेत्। तथा सति नामसङ्कीर्तनं फलविशेषाय स्वीकृतं पुरुषार्थं न भवेत् तथा नित्यकर्मत्वस्य व्यवस्थाऽपि नोपपद्यते। अस्य समाधानायाचार्यवर्यो द्वितीयं न्यायं सञ्चारयति—

'दर्शपूर्णमासाभ्यां सोमेन यजेत' इतिवत् कालार्थः संयोगः।' इति।

प्रकृतो ज्योतिष्टोमयागः स्वर्गफलायाऽन्यत्र विहितोऽस्ति, अतोऽसौ

दर्शपूर्णमासयोरङ्गं न भवितुमर्हतिः। दर्शपूर्णमासयोरप्यत्र फलाय विधानमस्ति तेन च तावपि ज्योतिष्टोमस्याङ्गतां नोपेतुं क्षमौ। एवञ्चात्र कालार्थः संयोगो भवति दर्शपूर्णमासकालपश्चाद्भावी ज्योतिष्टोम इति। अत्र श्रीभास्कररायस्तत्रत्यां युक्तिं प्रस्तौति—

'अर्चनजपकीर्तनानां प्रत्येकं विधिभिः फले विनियोगेन कृतार्थत्वात्।' इति। एवञ्चात्र नाङ्गाङ्गित्वम्। तथा सति पूजनजपन्यासकालादनन्तरमेव श्रीललितासहस्रनामस्तोत्रपाठः कर्तव्यो भवति। प्रकृतग्रन्थेऽपि ते मीमांसान्यायसमालम्बनेन गूढपदार्थजातमवगमयन्ति। भाषाव्याख्यायामाचार्यवरेण वितत्य तत् सर्वं प्रत्यपादीति पुनर्मया न वितन्यते।

## श्रीभास्कररायदीक्षिताः

श्रीत्रिपुरोपनिषदो भाष्यकर्तारस्तथाऽनेकग्रन्थनिर्माणप्रदर्शिताप्रतिमशेमुषीकाः श्रीभास्कररायदीक्षिताः कर्णाटप्रान्तान्तवर्तिबीजापुराभिजना यात्राप्रसङ्गाद्-भागानगरे (साम्प्रतिके हैदराबादे) जनिं जगृहुः। एतेषां पितृपादाः श्रीगम्भीररायदीक्षिता आसन्। मातुर्नाम कोनमाम्बाऽऽसीत्। श्रीगम्भीररायदीक्षिता बीजापुरनगरे तात्कालिकयवनाधिपस्य सचिवा आसन्। तेऽपि विविधविद्यापरिष्कृतस्वान्ता देवतोपासका ग्रन्थकर्तारश्चाऽऽसन्। सकलसंस्कारसहकृतानेकशास्त्रपरिशीलनपरिष्कृतमतीनां विहितपरदेवतोपास्तिततीनां श्रीभास्करसयमखिनामुपनयनसंस्कारो वाराणस्यां निष्पन्नः। अधीतिस्तु लोकापल्लीनिकेतजुषां सर्वविद्याधराणां श्रीनृसिंहाध्वरिपादानां सन्निधानेऽभूत्। श्रीस्वामिशास्त्रिनामा किलैतेषां गुरुपुत्र आसीत्। अनयोः सहैव विद्याधिगमः संश्रूयते। उभयोः परिश्रमेण जायमानः पूर्वमीमांसावादकुतूहलाभिधो ग्रन्थो वर्तते यस्य हस्तलेखः सरस्वतीभवनग्रन्थागारे तिष्ठति। श्रीभास्कररायमखिनां विद्याविषये तदीयशिष्यस्य श्रीजगन्नाथपण्डितवर्यस्याऽयं श्लोको दृश्यते भास्करविलासाभिधे काव्ये—

**'स बालभावे जनकोपदिष्टसारस्वतोपासनया नयाढ्यः ।**
**विद्याः समस्ताः सकलाः कलाश्च विनापि यत्नेन वशीचकार।।'** इति।

एतेषां न्यायशास्त्रपरिशीलनं श्रीगङ्गाधरवाजपेयिसकाशात् तथा साहित्यशास्त्रचिन्तनं श्रीरुक्मणणापण्डितादभूत्। एतेने निश्चीयते यत्तेषामन्येऽपि गुरव आसन्निति।

श्रीविद्यासम्प्रदायनिबन्धना अनेकाः कृतय एतेषामाचार्याणां चकासति जगतीतले। श्रीललितासहस्रनामस्तोत्रीयं सौभाग्यभास्कराभिधं तदीयसर्वज्ञ-कल्पताद्योतकं भाष्यम्, वामकेश्वरतन्त्रस्य सेतुबन्धसमाख्यानभूषिता टीका, वरिवस्यारहस्यम्, कौलत्रिपुराभावनोपनिषदां भाष्याणि तृचभास्करप्रभृतयश्च ग्रन्था विलसन्त्येतेषाम्। विविधसूचीपत्रेभ्य एतेषां षट्सप्ततिसंख्याका ग्रन्थाः सन्तीति निश्चीयते। एते श्रीनृसिंहाध्वरिगुरुभिः संप्रेषिताःसूर्यपुरनगरमुपेत्य परमोपासकेभ्यः साक्षात्कृतपरदेवतातत्त्वेभ्यः श्रीशिवदत्तशुक्लपदप्रवालेभ्यः पूर्णाभिषेकसंस्कारतः परिपूर्णा इवाजायन्त। एतैः स्थले स्थले शास्त्रार्थो राजसम्माना विजयश्रीश्च समासादिता। एतेषां जीवनावधिकालः १६७५ ख्रीस्ताब्दादारभ्य १७६८ पर्यन्त आसीत्। प्रामाणिकानां विदुषामेष निर्णयः।

## श्रीरामानन्दतीर्थयतिवराः

प्रकृतां श्रीत्रिपुरोपनिषदं निजविस्तारबहुलभाष्येणानुगृहीतवतां श्रीरामा-नन्दतीर्थपादानां गुरवः श्रीराघवानन्दतीर्थयोगीन्द्रपदप्रवाला आसन्। प्रायः सार्धशतकाच्छतकद्वयाद् वा प्राग् विरचितं तदीयमत्रत्यभाष्यमिति यथा प्राप्तप्रमाणैरवगम्यते। एते चोलद्रविडप्रान्ते कृतनिवसतय इति निश्चीयते। एतेषां यतिवराणां प्रकृतोपनिषद्भाष्यमतीव महिममण्डितम्। श्रीशङ्करा-चार्याणामद्वैतसिद्धान्ते शेमुषीदार्ढ्यादिमे वेदान्तसिद्धान्तमनुसरन्तः शक्ति-तत्त्वमपि तथैव व्याख्यान्ति। अस्मिन् विषय एतेषां भूयान् परिश्रमः श्लाघनीयो वर्तते। उदाहृत्य निगमागमग्रन्थानेते तदीयव्याख्याने प्रवृत्ता दृश्यन्ते। सौन्दर्यलहरीटीकाकारस्य श्रीलक्ष्मीधरस्यापि यद्विषये व्याख्यानं नास्ति तद्विषय एतेषां व्याख्यानमस्ति। व्याख्याकौशलं तथैतेषां परिस्फुरति। एते महानुभावा अप्युदाहृतवेदव्याख्याने न्यायमालम्बन्ते। तथा हि—

**'अश्रृतास श्रृतासश्च यज्वानो येऽप्ययज्वनः स्वर्यन्तो नापेक्षन्ते।'**

इतिवचनव्याख्यानावसरे चक्रविद्योपासने शूद्राधिकारसमर्थनाय निषाद-स्थपत्यधिकरणोक्तन्यायमाललम्बिरे। अत्र तेषां सर्वं व्याख्यानमेवं समुल्ल-सति—

'अश्रृतासः अपक्वा अक्षपितान्तःकरणकल्मषा इत्यर्थः। श्रृतासश्च पक्वाश्च। आज्जसेरसुगित्यसुगागमः। क्षपितान्तःकरणकल्मषा इत्यर्थः। अज्वानो यजनशीलास्त्रैवर्णिका आश्रमिणश्च। अयज्वनो यागरहिताः

शूद्रादयः। तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति श्रुतिस्त्रैवर्णिकैकनियताधिकार-यज्ञशब्दवाच्याग्निष्टोमादिपरा। चक्रविद्योपासने शूद्राणामप्यधिकारचोदनाद् निषादस्थपितवद् वैदिके कर्मण्यधिकारसिद्धेर्न काचित् क्षतिः। 'यन्तः' इण् गतौ। चक्रविद्यामवगन्तारः स्वः स्वर्गं नापेक्षन्ते।' इति।

अत्र 'अयज्वनो यागरहिताः शूद्रादय' इतिवचनमपशूद्राधिकरणन्यायं स्पृशत्येव। स्वर्गं नापेक्षन्त इत्यनेन निःश्रेयसाख्यं मोक्षमपेक्षन्त इत्यर्थबलेनायं सिद्धान्तो हृदि स्फुरति—

**'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।**
**ज्ञानं तु विमलीकुर्वन्नभ्यासेनैव पाचयेत् ।।**
**अभ्यासात् पक्वविज्ञानः कैवल्यं लभते नरः।।'** इति।

चक्रविद्याभ्यासश्च कैवल्यसाधनत्वेन नित्यकर्मान्तर्गत इति तात्पर्यं स्फोरयन्त्येते स्वीयव्याख्यानकौशलेनेति तद्भाष्यमप्यतीवोपयोगि जिज्ञासुजनायेत्युभयभाष्यसंवलितत्रिपुरोपनिषत्संपादनेन कृतकृत्यतामनुभूय श्रीदेवतायाः पदकञ्जयोरपचितिमुपरचय्य विरमामि। प्रयासोऽयं विपश्चिज्जनतोषाय भवत्विति शम्।

विदुषां विधेयः
**क्षितीश्वरनाथ पाण्डेयः**
वरिष्ठ प्राध्यापक
ब्रह्मर्षिसंस्कारधाम, नडियाद (गुजरात)

# विषयानुक्रमणिका

॥ श्रीः ॥

# श्रीत्रिपुरोपनिषद्

तिस्रः पुरस्त्रिपथा विश्वचर्षणी अत्राकथा अक्षराः संनिविष्टाः ।
अधिष्ठायैनामजरा पुराणी महत्तरा महिमा देवतानाम् ।।१।।

## श्रीराघवानन्दतीर्थयोगीन्द्रशिष्यश्रीरामानन्दतीर्थविरचितं भाष्यम्

शोणप्रभं सोमकलावतंसं पाणिस्फुरत्पञ्चशरेक्षुचापम् ।
प्राणप्रियं नौमि पिनाकपाणेः कोणत्रयस्थं कुलदैवतं नः ।।१।।

घ्राणायुष्करबाणां रसनाजीवननिदानचापलताम् ।
पाशाङ्कुशाङ्कितकरां प्राणकलां नौमि पञ्चवक्त्रस्य ।।२।।

दीव्यन्तौ तमसः पारे स्त्रीपुंसौ व्यक्तविग्रहौ ।
जगतः पितरावाद्या उपासे दिव्यदम्पती ।।३।।

त्रयी-सीमन्तसिन्दूर-रञ्जित-श्रीपदाम्बुजौ ।
परब्रह्ममहामञ्चनिविष्टौ भावये शिवौ ।।४।।

ययोरुपासनं पुंसां प्रेयःश्रेयःप्रयोजनम् ।
जगत्कुटुम्बप्रथितौ दम्पती प्रणमामि तौ ।।५।।

समकालोदितानेकसूर्यमण्डलभास्वरम् ।
मिथः सदा परिष्वक्तमिथुनं किमपि श्रये ।।६।।

शृङ्गारसान्तसर्वस्वं शृङ्गारितपरस्परम् ।
चिरन्तनं स्वप्रतिष्ठं चिन्तये मिथुनं मिथः ।।७।।

नत्वा श्रीराघवानन्दतीर्थयोगीन्द्रपादुकाम् ।
त्रिपुरोपनिषद्भाष्यं क्रियते तत्कृपाबलात् ।।८।।

श्रीशङ्कराचार्यकृतान् प्रबन्धान् सौभाग्यविद्या-सुभगोदयादीन् ।
पुनः पुनः साधु विचिन्त्य बुद्ध्या तदध्वना भाष्यमिदं करोमि ।।९।।

धीमन्तोऽभीष्टसाधने प्रवर्तन्ते, अनिष्टसाधनात् निवर्तन्ते, तदुभयभिन्न-मुपेक्षन्ते। इष्टत्वादितारतम्यात् प्रवृत्त्यादेरपि तारतम्यं भवति। आत्मा चेष्टतमः तदात्मलाभान्न परं विद्यते। तथा च बृहदारण्यके—[१]'तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मात्, अन्तरतरं यदयमात्मा', 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति।

अन्यत्राऽपि—'तरति शोकमात्मवित्', 'ज्ञात्वा तन्मृत्युमत्येति', 'ज्ञात्वा देवं मुच्यते सर्वपाशैः', 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति', 'ईशानं ज्ञात्वा मृत्युपाशाञ्छिनन्ति', तमेव विदित्वा अतिमृत्युमेति', 'इह चेदवेदीत् अथ सत्यमस्ति', 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति', 'तद् यो यो देवानां प्रत्यबुद्ध्यत', 'ब्रह्मविद् ब्रह्मैव भवति', 'यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह' इत्यादिना आत्मवेदनं अमृतत्वप्राप्ति-हेतुरित्यभ्यधायि।

आत्मवेदनं तु ब्रह्मविद्यैव,

**'अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढाम्।**
**ययाऽचिरात् सर्वपापं व्यपोह्य परात्परं पुरुषमुपैति विद्वान्।।'**

'विद्या ह वै ब्राह्मणमाजगाम', 'तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद् ब्रह्मवित् यस्मात् सर्वमभवत्', 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्', 'आत्मविद्या तपोमूलं सर्वं तद् ब्रह्मोपनिषत् परम्', 'विद्ययाऽमृतत्वं विन्दते', इत्यादि श्रुतिभ्यः।

विद्या द्विविधा—परा अपरा चेति। अपरा कर्मकाण्डविषया, परा ब्रह्मविषया। तथा च मुण्डकोपनिषदि—'द्वे विद्ये वेदितव्ये इति ह स्म यत् ब्रह्मविदो वदन्ति। परा चैवाऽपरा च। तत्राऽपराऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परायया तदक्षरमधिगम्यते, यत् तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुरश्रोत्रं तदपाणिपादं नित्यं विभु सर्वगतं सुसूक्ष्म'मिति द्विरूपत्वं काण्डद्वयविषयत्वं च विद्यायाः प्रतिपादितम्।

तत्र ब्रह्मविद्या द्विप्रकारा-स्थूला सूक्ष्मा च। स्थूला उपनिषद्रूपा, सूक्ष्मा प्रणवरूपा। स्थूलायाः प्रतिपादकत्वेन ब्रह्मविद्यात्वं गौणम्। सूक्ष्मायाः प्रतिपाद्यत्वेन

---

१. पराविद्यायाः श्रीविद्यायाश्चैक्यं स्थापयितुमुपनिषद्वाक्यानि निर्दिशति।

ब्रह्मविद्यात्वं मुख्यम्। तथाहि- 'सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति, तत् ते पदं सङ्ग्रहेण ब्रवीमि ओमित्येतत्।'

**'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।**
**एतद्ध्येऽवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ।।'**

'एतद् वै सत्यकाम परं चाऽपरं च ब्रह्म यदोङ्कारः', 'तदेकधा समभरत्, तदेतदोमिति', 'ओमिति ब्रह्म ओमितीदं सर्वम्', 'ओङ्कार एवेदं सर्वम्', 'ओमित्येवं ध्यायथ आत्मानम्', 'स्वस्ति वः पाराय तमसः परस्तात्', 'ओमित्येतदक्षरम्'। इदं सर्वं तस्योपव्याख्यानं भूतं भवद् भविष्यदिति', 'सर्वमोङ्कार एव, यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव', 'अयमात्मा ब्रह्म', 'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः'। 'एवमोङ्कार आत्मैवम् ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यमित्येतदक्षरं परं ब्रह्म सर्वध्यानयोगज्ञानानां यत् फलम् ओङ्कारो वेद। पर ईशो वा शिव एको ध्येयः शिवङ्करः' इति प्रणवस्य प्रतिपाद्यत्वेन ब्रह्मविद्यात्वं मुख्यम्। उपनिषदां प्रतिपादकत्वेन ब्रह्मविद्यात्वं गौणमिति सर्ववेदेषु श्रूयते। सूतसंहितायामपि—

**'प्रणवं सम्प्रवक्ष्यामि समासेन न विस्तरात् ।**
**परापरविभागेन प्रणवस्तु द्विधा मतः ।।**

**परात् परतरं ब्रह्म प्रज्ञानन्दादिलक्षणम् ।**
**प्रकर्षेण नवं यस्मात् परं ब्रह्म स्वरूपतः ।।**

**अपरः प्रणवः साक्षात्, छन्दोरूपः सुनिर्मलः ।**
**प्रकर्षेण नवत्वस्य हेतुत्वात् प्रणवः स्मृतः ।।**

**परमप्रणवप्राप्तिहेतुत्वात् प्रणवोऽथवा ।'** इत्यादि।
**'अजायन्त क्रमेणैव कोटिसूर्यसमप्रभाः ।**
**अकारश्च तथोकारो मकारश्चेति सुव्रताः ।।**

**तानेकधा समभरदज ओमिति स प्रभुः ।**
**तस्मिन्नेव शिवः साम्बः सर्ववस्त्ववभासकः ।।**

**प्रतिबिम्बितवांस्तेन प्रणवस्तस्य वाचकः ।।'** इति।

अयं भावः—सत् एकम् अद्वितीयं भूमानन्दं यत् आत्मतत्त्वम्, तत् सर्वदाप्येकमेव। तत् पुनः अविद्यादशायां स्वात्मकल्पितमायासंवेशात् अव्यक्तताख्यं

बीजं सत् सूक्ष्मं वटबीजमिव सूक्ष्मा-परा-पश्यन्ती-मध्यमा-वैखरी-महामूलदृढम्, अनेकार्थं नानाधातुपार्श्वोपमूलं नानाशाखाभेदभिन्नं सर्वमूलप्रमाणस्वतः-प्रमाणचतुर्वेदमहाप्रकाण्डं शिक्षादिषडङ्गमहाशाखं स्मृतीतिहासाऽऽगम-विस्तृतनानोपशाखं तर्कयोगसाङ्ख्यशास्त्रकोटरभीषणं नानापुराणपत्रसुच्छायं काव्यनाटकप्राकृतपैशाचादिनानाभाषाकिसलयरमणीयम् अनेकपाखण्डशास्त्रपाण्डुपत्रं धर्मशास्त्रबहुमुकुलम् उपासनाशास्त्रकुसुमस्तबकं 'सुखो अहम्' इति निरन्तर-शब्दायमानदेवतिर्यङ्नानापक्षिनिबिडचतुर्दश-भुवननीडजालं शब्दादिविषयजीवनं पञ्चमहाभूतबद्धवेदिकं सप्तकोटि-महामन्त्रसिराजातं वृक्षं दर्शयित्वा स्वयं तन्मूलकारणमाह। तस्मात् पुनः स्वयमुत्पन्नमिव अस्मात् सूक्ष्मादपि अतिसूक्ष्माद-व्यक्ताद् बीजात् शब्दार्थ-प्रपञ्चात्मकोऽयं महावृक्षो जायत इति दर्शयितुम् अव्याकृतमव्याकृतम् एतेन स्वयमेव प्रतिपाद्यप्रतिपादकभावमापद्यते। 'एतद् वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः' इत्यादि श्रुत्या परमात्मैव ओङ्कारः। स एव विद्यादशायां विचारतः ब्रह्मभावं वेत्तीति ब्रह्मविद्येति गद्यते। इदमत्राकूतम्—

'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्ये'त्यादिना स एव जीवो भूत्वा 'कोऽयमात्मेति वयमुपास्महे', 'कतर आत्मे'ति विचारः। 'तदात्मानमेवावेत् अहं ब्रह्मास्मीति तस्मात् तत् सर्वमभवत्' इत्यादि श्रुत्युक्तरीत्या नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयं ब्रह्मैवाहमस्मि इति, स्वयमेव स्वात्मानं वेत्तीति ब्रह्मविद्येति गद्यत इति, तत्प्रतिपादकोपनिषदपि 'ब्रह्म वेदयती'ति गौण्या वृत्त्या ब्रह्मविद्येत्युच्यते। एषा केवलशुद्धसत्त्वाश्रयचिन्मात्ररूपा। तथा च तापिन्याम्—'अथ सामश्रवा याज्ञवल्क्यं प्रत्युवाच कथं ते भगवन्! ब्रह्मविद्यानामाख्या ब्रह्मण्याधाता सङ्ग्रहान्ममोपदिश' अथाह याज्ञवल्क्येति होवाच- 'शृणु सौम्य! अनवशिष्टब्रह्मणः सकाशात् ब्रह्मणि आस्थिता प्रकृतिरियम् अग्रे चतुर्विधा-केवला, सत्त्वप्रधाना, रजः-सत्त्वोपसर्जना, तमःप्रधाना चेति एवं चतुर्विधा, ततः चित्केवलाम् अवलम्ब्य ध्यानमुख्या ब्रह्मविद्या, तथा रजस्तमोपसर्जनसत्त्वप्रधानं स्वीकृत्य सर्वज्ञ ईश्वरो जातः। ततः तमःसत्त्वोपसर्जनं रजःप्रधानं प्रविश्य 'जीव' इति, रजःसत्त्वोप-सर्जनतमःप्रधानं ईश्वरः सङ्गृह्य जीवस्य भोग्य-भोगायतन-भोगार्थं आकाशादि-महाभूतानि कृत्वा भूतसत्त्वांशैः ज्ञानेन्द्रियाणि सत्त्वसमष्ट्या अन्तःकरणं च, तद्रजोंशैः कर्मेन्द्रियाणि च तत्समष्ट्या प्राणं च अथ भूतानि पञ्चीकरणं कृत्वा रजोपहितं प्रतिबिम्बभूतं कृत्वा, स्वयं बिम्बभूतः सन् स्थितवान्' इति। शुद्धसत्त्वाश्रयचिद्रूपा ब्रह्मविद्येत्युक्तम्। सूतसंहितायां च—

'चिन्मात्राश्रयमायायां शक्त्याकारे द्विजोत्तमाः ।
अनुप्रविष्टा या संवित् निर्विकल्पा स्वयम्प्रभा ।।'

'सदाकारा परानन्दा संसारच्छेदकारिणी ।
सा शिवा परमा देवी शिवाभिन्ना शिवङ्करी ।।'

'एषा सा साक्षिणी शक्तिः शङ्करस्यापि शङ्करी ।
शिवाभिन्ना तथा हीनः शिवः साक्षान्निरर्थकः।।'

इति परब्रह्मविद्याया एव नामान्तरं 'श्रीविद्ये'ति। तथा चोक्तं तापिन्याम्-'अथ भगवन् कथं परमहंसा ब्रूहि, का ब्रह्मविद्या? मनूनां सर्वेषां भूतानां प्रथमा श्रीविद्या। ब्रह्मविद्या वा अन्या वा? अपि आद्यपक्षो यदि ब्रह्मसदृशविद्या वा ब्रह्मैव विद्या वा? मायाधिष्ठितचैतन्यरूपशिवाभिन्ना वा तच्चैतन्यरूपा वा? द्वितीयश्चेत्, ब्रह्मविद्याया न हि ब्रह्मविद्यात्वम्। वक्तव्यम् आद्यपक्षमवलम्ब्य तत् कथम्? अथ याज्ञवल्क्यः प्रोवाच-शृणु सौम्य चरमपक्षे श्रीविद्यायाः परब्रह्मविद्यात्वं युक्तम्। आद्यपक्षे चातुर्विध्यं विकल्पितं ब्रह्मसदृशविद्या वा ब्रह्मैव विद्या वा, मायाधिष्ठितचैतन्यशिवाभिन्ना वा, तच्चैतन्यरूपा वा इति चतुर्विधा। अनन्तरं ह्याद्यपक्षे ब्रह्मसदृशा चेदौपचारिक-तया तदप्रयोजकम्। न तस्मात् ब्रह्मसदृशा भवति। द्वितीये ब्रह्मैव विद्या चेत्, असङ्गततया न हि ब्रह्मविद्यात्वम्। चरमपक्षे मायाधिष्ठितचैतन्यरूपा चेत्, ईश्वर एव, देवताऽप्येकस्य मायाधिष्ठितस्य चैतन्यस्य ईश्वरत्वं चेत्, देवतात्वं कथं वक्तव्यम्? तस्मात् तृतीयपक्षमवलम्ब्य शिवाभिन्ना चेत्, सा ब्रह्मविद्या समीचीना, सैव देवता, सा श्रीविद्येति। 'श्रीविद्यारत्नभाष्येऽपि' भगवत्पादैः श्रीविद्यैव ब्रह्मविद्येति प्रतिपादितम्। 'शृ हिंसायाम्' इति शृणाति = हिनस्ति 'ब्रह्माहमस्मी'ति अखण्डाकारवृत्तिफलकारूढं सत् कार्य-कारणात्मकं लोकप्रपञ्चं प्रविलापयतीति 'श्रीः' प्रत्यक्चितिः परमात्मा, स एव विद्यादशायां विचारतः ब्रह्मात्मभावं वेत्ति। 'कः परमात्मा को जीवः, किमिदं जगत्, कथं बन्धः, कथं मोक्षः' इति विचारः। स एव जीवो भूत्वा ज्ञातब्रह्माभिन्नप्रत्यगात्मभावरूपं वेत्ति, स्वयमेवाहं ब्रह्मास्मि, स एव लब्ध-प्रत्यगभिन्नब्रह्मात्मभावस्य इव वेत्ति। स्वयमेव नित्यशुद्धनित्यस्वभाव- ब्रह्मैव अहमस्मीति कण्ठगतचामीकरवल्लभ इति। श्रीश्चासौ विद्या चेति श्रीविद्येत्युच्यते, तत्प्रतिपादिका विद्यापि श्रियं प्रत्यक्चिन्मात्रं परमात्मानं वेदयति, विचारं कारयति, ज्ञापयति, लापयतीति गौण्या वृत्त्या 'श्रीविद्येत्युच्यते' इति। अत्र श्रीविद्यायाः परब्रह्मविद्यात्वं युक्तम्। सा ब्रह्मविद्या समीचीना। सैव देवता। सा श्रीविद्येति वक्तुर्वेदस्यायमभिप्रायः—

ब्रह्मविद्याख्य ओङ्कारस्त्रिमात्रोपेतः श्रीविद्याख्य ईकारोऽपि त्रिबिन्दूपेत इति लक्षणसाम्यात् अनयोरभेद इति।

ननु ओङ्कारस्य ब्रह्मविद्यात्वं सर्वश्रुतिसिद्धम्। ईकारस्य श्रीविद्यात्वं कुत्र दृष्टम्? इति चेत्, तदपि सर्वश्रुतिसिद्धमेव। 'तां पद्मिनीमीं शरणमहं प्रपद्ये' 'यः प्राणिति, य ईं शृणोति यदीं शृणोत्यलकं शृणोति 'य ईं चकार न सो अस्य वेद'। 'य ईं ददर्श' 'चत्वार ईं बिभ्रति क्षेमयन्तः'। 'स ईं पाहि', 'स ईं सत्येभिः सखिभिः शुचद्भिः' क ईं ससुते सचा, 'क ईं व्यक्त्या नरस्सनीलाः। य ईं वहन्त आशुभिः' इति श्रुतेः।

**अयमर्थः**—अकारो विष्णुवाचकः। तस्य स्त्री 'पुं' योगादाख्यायमि'ति ङीषि तस्यामिति अमा यथार्थानुभवः परोक्षश्रुत्या लुप्ताकारत्वेन अर्थो ग्राह्यते, 'मितेरपीतेर्वा' इति श्रुतेः। तस्मादीकारस्य श्रीविद्यात्वमिति।

किं च—ईकारनिरूपणे श्रीपर्यायनामानि श्रुतिपुराणागमेषु दृश्यन्ते। 'कामो योनिः कमला वज्रपाणिः। कामादिमन्त्रराजस्तु स्मरो योनिः श्रियो मुखम्' 'स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ तव मनोरित्येवमादीनि। किं च—श्रीविद्यामनो-राम्नायस्वरूपमुद्दिश्य, इत्युपक्रम्य 'शृणु सौम्य! ब्रह्मवाचकवस्तु प्रणवो वर्तते। स पुरा प्रपञ्चाधिष्ठानविद्या । स हि त्रिमात्रोपहितेति तापिन्यां श्रीविद्याब्रह्मविद्ययोर-त्यन्ताभेदः प्रतिपादितः। अन्योपि 'गायत्री छन्दसां माता' इत्युपक्रम्य 'अभिभूरों गायत्रीमि'ति कामकलाब्रह्मविद्ययोरभेदोऽभ्यधायि। पुनरपि ब्रह्मविद्याया अत्यन्त-गुह्यानि श्रुतिपुराणागमप्रसिद्धानि सन्ति कानिचिन्नामानि। तान्यत्र प्रकृतोपयोगितया उदाह्रियन्ते। घृतसूक्ते—

> **'श्रियं लक्ष्मीमौबलामम्बिकां गां षष्ठीं जयाम् इन्द्रसेनेत्युदाहुः ।**
> **तां विद्यां ब्रह्मयोनिं सरूपाम् उदायुषो तर्पयामो घृतेन ।।'**

इति। त्रिपुरतापिन्याम् महोपनिषदि च—'तान् सहोवाच सर्वे यूयं श्रुत्वाऽपूर्वां कामाख्यां विद्यां तुरीयरूपां सहृदयां सामृतां सकलां सेन्द्रियां सदोदितां परापराविद्यां स्फुटीकृत्वा हृदये निधाय ध्यानेऽन्वयं गमयित्वा त्रिकूटां त्रिपुरां परमां मायां श्रेष्ठां परां वैष्णवीं सन्निधाय हृदयकमलकर्णिकायां परां भगवती लक्ष्मीं सदोदितां महावश्यकरीं मदनोन्मादिनीं धनुर्बाणधारिणीं वाग्बीजगतां चन्द्रमण्डलवर्तिनीं चन्द्रकलां सप्तदशीं, महानित्योपस्थितां पाशाङ्कुशमनोज्ञपाणिपल्लवां समुद्यत्सहस्रार्कनिभां त्रिणेत्रां विचिन्त्य देवीं महालक्ष्मीं मायां सर्वलक्षणसम्पन्नां हृदये चैतन्यरूपिणीं निरञ्जनीं त्रिकूटाख्यां स्मितमुखीं महामायां देवीं सुन्दरीं

सुभगां कुण्डलिनीं त्रिपीठमहावर्त्तिनीं अकथादिश्रीपीठेशीं परां चित्कलां महात्रिपुरां देवीं ध्यायेत् महाध्यान-योगेनेति। एतेषां नाम्नां निष्पत्तिं तत्प्रकरणे विशदीकरोमि।

एषैव देवता, 'अहं रुद्रेभिः' 'पवमान' 'शन्न' इत्यादित्रिःसूक्तशास्त्र-मन्त्रोपनिषद्भिः ऋक्शाखाभिः 'गन्धद्वाराम्', 'अनन्तामन्तात्' 'चित्रावसो', 'आवहन्ती', 'प्रजापतिर्देवानसृजत', 'चरणं पवित्रं', 'इयं वाव सरघा पुत्रो निर्ऋत्या वैदेहः' इत्यादिसूक्तोपनिषन्मन्त्रब्राह्मणैः यजुःशाखाभिः श्रीनिधन-हाई-श्रीनिधनादिभिः बहुविधसामभिः यज्ञायज्ञीयगायन्तीयबृहद्रथन्तर-वाचोव्रत-पुरुषव्रतज्येष्ठसामादिभिः सोहनिधनादिविशेषेण अत्यन्तरहस्यतया प्रकाश्यते। 'एषैव उपास्येति पुराणान्यागमाश्च अनुशासति। यथा ब्रह्माण्डपुराणे अगस्त्यं प्रति हयग्रीववचनम्—

'वर्णाश्रमविहीनानां पापिष्ठानां नृणामपि ।
यद्रूपध्यानमात्रेण दुष्कृतं सुकृतायते ।।

येऽर्चयन्ति परां शक्तिं विधिनाऽविधिनाऽपि वा ।
नैते संसारिणो नूनं मुक्ता एव न संशयः ।।

शिवोऽपि यां समाराध्य ध्याननिष्ठाबलेन च ।
ईशानः सर्वविद्यानामर्धनारीश्वरोऽभवत् ।
अन्येऽब्जप्रमुखा देवाः सिद्धास्तद्ध्यानवैभवात् ।
स्वातन्त्र्याद् विश्ववैचित्र्यं दर्शयन्ति युगे युगे ।।

तस्मादशेषलोकानां त्रिपुराराधनं विना ।
न स्तो भोगापवर्गौ तु यौगपद्येन कुत्रचित् ।।' इति।

प्रायश्चित्तखण्डे बृहस्पति—

'कृतस्याऽखिलपापस्य ज्ञानतोऽज्ञानतोऽपि वा ।
प्रायश्चित्तमिदं प्रोक्तं पराशक्तेः पदस्मृतिः ।।

इदं च शृणु देवेन्द्र! रहस्यं परमं महत् ।
सर्वेषामपि पापानां यौगपद्येन नाशनम् ।।

भक्ति-श्रद्धा-समायुक्तः स्नात्वाऽन्तर्जलसंस्थितः ।
अष्टोत्तरसहस्रं तु जपेत् पञ्चदशाक्षरीम् ।।

आराध्य च परां शक्तिं मुच्यते सर्वकिल्बिषैः ।
तेन नश्यन्ति पापानि कल्पकोटिशतान्यपि ।।

सर्वापद्भ्यो विमुच्येत सर्वाभीष्टं च विदन्ति ।।'

प्रदेशान्तरे—

एतस्मिन्नन्तरे विष्णुः सर्वलोकैकरक्षकः ।
सम्यगाराधयामास ललितां विश्वरूपिणीम् ।।

भगवानपि योगीन्द्रः समाराध्य महेश्वरीम् ।
तदैकध्यानयोगेन तद्रूपः समजायत ।।

पूजाखण्डे—

'अन्यदैवतपूजानां यस्याः पूजाफलं विदुः ।
यस्याः पूजाफलं प्राहुर्यस्या एव हि पूजनम् ।।

तस्याः श्रीललितादेव्या वर्णयामि कथां पुरा ।।' इति।

मदालसाखण्डेऽपि—

'इन्द्रस्येन्द्रत्वमेतेन मन्त्रेण ह्यभवत् पुरा ।
विष्णोर्विष्णुत्वमेतेन भानोर्भास्करताऽमुना ।।

सर्वेषामेव देवानां तास्ताः सिद्धय उज्ज्वलाः ।
अनेन मन्त्रजातेन जाता इत्यवधारय ।।' इति।

वामकेश्वरतन्त्रे—

'परो हि शक्तिरहितः शक्तः कर्तुं न किञ्चन ।
शक्तस्तु परमेशानि! शक्त्या युक्तो यदा भवेत् ।।' इति।

तत्रैव—

'एतामेव पुराऽऽराध्य विद्यां त्रैलोक्यमोहिनीम् ।
त्रैलोक्यमोहनं रूपमकार्षीद् भगवान् हरिः ।।

कामदेवोऽपि देवेशि! महात्रिपुरसुन्दरीम् ।
समाराध्याऽभवल्लोके सर्व-सौभाग्यसुन्दरः ।।' इति।

स्मृतिरपि—

'विश्वात्मिका तदुत्तीर्णा हृदयं परमेश्वरी ।।' इति।

श्रीखण्डेऽपि—

'नात्र कालः कलाभावो नैकता न च देवता ।
सुनिर्वाणं परं शुद्धं गुरु-वक्त्रं तदुच्यते ।।

**शिवशक्तिरिति ख्यातं निर्विकल्पं निरञ्जनम् ।**
**पश्यामि तं वरारोहे! विज्ञानातीतमद्भुतम् ।।**

**अविष्कलं तु सकलं नीरूपं निर्विकल्पकम् ।**
**निर्द्वन्द्वं परमं तत्त्वं शिवाख्यं परमं पदम् ।।'** इति।

चिदानन्दवासनायामपि—

**'विश्वात्मिकां तदुत्तीर्णां प्रकाशामर्शरूपिणीम् ।**
**परापरमयीं देवीमात्मत्वेन विचार्यताम् ।।'** इति।

चतु:शत्यां च—

**'त्रिपुरा परमा शक्तिराद्या ज्ञानादित: प्रिये ।**
**स्थूलसूक्ष्मविभेदेन त्रैलोक्योत्पत्तिमातृका ।।**
**कवलीकृतनि:शेषतत्त्वग्रामस्वरूपिणी ।।'** इति।

एवं सकलजगत्कारणभूता त्रिपुरसुन्दरी ब्रह्मविद्या निखिलवेदान्तसार-भूतया त्रिपुरोपनिषदा प्रकाश्यते ।

## अवतारिका

इयमुपनिषत् ऋग्वेदान्तर्गतसाङ्ख्यायनशाखायामाम्नाता। अनया आद्या शक्ति: अनवच्छिन्ना पराभट्टारिका शिवादिक्षित्यन्ता षट्त्रिंशत्तत्त्वमय-सर्वप्रपञ्चात्मिका तदुत्तीर्णा चेति सर्वोपनिषत्प्रसिद्धा त्रिपुराऽभिधीयते। एवं हि सत्सम्प्रदायविद्भि: महायोगिभि: त्रिपुराशब्दनिर्वचनं श्रूयते। कथम्? त्रिभ्यो तेजोबन्नादिभ्य: पुराभूता त्रिपुरेति। तेजोबन्नादिभ्य: पूर्वसत्त्वमेव हि सर्वतत्त्वातीतं तत्त्वं ब्रह्मण:। तद्द्वारा सर्वतत्त्वात्मकत्वं तु उपनिषदप्येतदाह। तथाहि छान्दोग्ये षष्ठप्रपाठके—

"श्वेतकेतुर्ह आरुणेय आस। तं ह पितोवाच। श्वेतकेतो, वस ब्रह्मचर्यम्" इति वेदाध्ययनादिरूपब्रह्मचर्यं विचार्य, आचार्य: श्वेतकेतवे अधीतसर्ववेदाय 'स्तब्धोऽसि उत तमादशम् अप्राक्षी: येनाऽश्रुतं श्रुतं भवति' इत्यादिना शिष्ययोग्यतां निश्चित्य, ब्रह्मविद्यामुपदिदेश। तत्र एकविज्ञानेन सर्वविज्ञानद्वारा सर्वतत्त्वानां तन्मयत्वमुक्तम्। तत्र दृष्टान्तमाकाङ्क्षमाण: शिष्य: पृच्छति—

**'कथं नु भगव: स आदेशो भवती'**ति **'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'** इत्यादि दृष्टान्तपरम्परया ब्रह्मणो विश्वात्मकत्वं तदुत्तीर्णं चाप्युक्त्वा अनन्तरं तु

**'सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयमि'**त्यादिना विश्वातीतं वस्त्वभिधाय पुनश्च विश्वात्मकत्वमभिधत्ते।

'तदैक्षत बहु स्यां प्रजायेये'ति सङ्कल्प्य, 'तत्तेजोऽसृजत, तत्तेज ऐक्षत बहु स्यां प्रजाये'ति, तदपोऽसृजत ता अन्नमसृजन्ते'ति। तेजोबन्नादि सृष्ट्वा, **'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतम् एकैकां करवाणि'** इति, **'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत्। तासां त्रिवृतं त्रिवृतमेकैकाम-करोत्'** इत्यादितेजोबन्नानामहम्भावेन ब्रह्मणः पूर्ववर्तित्वम्, सर्ववस्तुपूरकत्वं तु स्वस्वरूपमित्युक्त्वा तेजोबन्नात्मकमेव देवादिस्थावरान्ततत्त्वजातमाचष्टे। 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्। यदादित्यस्य रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां, यत्कृष्णं तदन्नस्य, अपागादादित्यादादित्यत्वम्, वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्, यच्चन्द्रमसो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य अपागाच्चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणि इत्येव सत्यमि' त्यादिना 'अन्नमशितं त्रेधा विधीयते' इत्यादि सा वागि'त्यन्तेन 'दघ्नस्सौम्य मथ्यमानस्य योऽणिमा, स ऊर्ध्वः समुदीषति, तत्सर्पिर्भवती'त्यादि अन्नमयं हि सौम्य मनः आपोमयः प्राणः तेजोमयी वागि'त्येन्तेन च त्रिवृत्कृतप्रपञ्चपूरणां त्रिपुरैव परा ब्रह्मैवेत्यभिधीयते। तथा चोक्तम्—

**'त्रिमूर्तिसर्गाच्च पुराभवत्वात् त्रयीमयत्वाच्च पुरैव देव्याः ।**
**लये त्रिलोक्या अपि पूरकत्वात् प्रायोऽम्बिकायास्त्रिपुरेति नाम ।।'**

इति तादात्म्यलक्षणेन सामीप्येन नितरां त्रिपुराख्यां देवतां गमयित्वा, अहमादिग्रन्थीन् शिथिलीकृत्य अविद्यासंस्कारान् सादयति विनाशयतीति' त्रिपुरोषनिषत्। इयमुपनिषत् शरीरत्रयात् प्रत्यगात्मानं विभज्य, तस्य तेजोबन्नादिविविक्तपरदेवतायाम् ऐक्यं श्रीचक्रपरदेवतास्वरूपप्रतिपादनद्वारा विभजते—

**श्रीरामानन्दकृतभाष्यम्—**

तिस्रः पुर इति पुरस्थानानि। कति पुरः? तास्तिस्रः त्रिसङ्ख्याकाः। पूःशब्दस्य स्त्रीलिङ्गत्वात् तद्व्यावर्तकस्य त्रिशब्दस्य 'त्रिचतुरोः स्त्रियां तिसृचतसृ'

इतिस्त्रादेशः। पुर्यः पूर्यमाणाः, पुरःतिस्त्र इति यावत्। पदद्वयेन त्रिकोणचक्रमुपलक्ष्यते। तासां त्रिकत्वहेतुमाह—

**'त्रिपथा विश्वचर्षणी'**ति। विश्वं जगच्चक्रम्, तत्र चर्षणशीला सञ्चरणशीला। 'चर गतिभक्षणयो'रिति धातोः औणादिकः प्रत्ययः। विश्वसर्जनोन्मुखीति यावत्। सा यस्मात् त्रिपथा त्रयः पन्थानः यस्या इति षष्ठीबहुव्रीहिः। त्रिमार्गा त्रिप्रकारा तस्मात् पुरस्तिस्त्र इत्यर्थः। त्रिप्रकारत्वं नाम बिन्दुत्रयमात्रात्रय-तत्त्वत्रय-व्याहृतित्रय-वाक्त्रय-बीजत्रय-वेदत्रय-लोकत्रय-गुणत्रय-सन्तानत्रय-गुरुत्रय-धामत्रय-पीठत्रय-शक्तित्रय-मातृकाद्यष्टमूल-त्रिकोणरूपमित्यर्थः। विश्वसर्जनोन्मुखी ब्रह्मविद्या त्रिमुखीति तापिन्यादि-सर्वश्रुतिषु दृश्यते। यथा—अथ श्रीविद्या-मनोराम्नायस्वरूपमुपदिश्यते ब्रह्म-चारिणे शान्ताय गुरुभक्ताय यथा विद्यामनुः कस्मिन्नु भगव एतत्स्वरूपं ब्रूहीति होवाचेह शृणु सौम्य ब्रह्मवाचकस्तु प्रणवो वर्तते। स पुरा प्रपञ्चाधिष्ठानविद्यासहितत्रिमात्रोपहितः, का मात्राः? अकारोकार-मकाराः तास्तत्त्वत्रयेण परिणमन्ति। तत् कथं तत्त्वत्रयत्वम्? तस्य भावस्तत्त्वम्। तदात्मविद्याशिवनामभिस्त्रयत्वम्। अतो ह्यात्मतत्त्वमेकम्, विद्यातत्त्वमन्यत्, शिवतत्त्वं पृथक्, तानि तत्त्वानि व्याहृतयः तान्येव परा-पश्यन्ती मध्यमाः। श्रुतिगोचरा मध्यमा, द्योतितार्था हि पश्यन्ती, ध्वनिः परा चेत्येवमर्थः। पुनस्तान्येव वाग्भव-कामराज-पराबीजानीत्येवमर्थः, तान्येव ऋग्यजुः- सामानि त्वित्येवमर्थः, तान्येव त्रयो लोका इत्येवमर्थः, तानि च परा-लोपामुद्रा-कामराज-पारम्परीत्येवमर्थः, पुनस्तानि शाम्भवी विद्या श्यामेति। बृहदारण्यकेऽपि त्र्यन्नप्रकरणे ब्रह्मणः त्र्यन्नरूपत्वं त्र्यन्नानां तु ब्रह्मविजृम्भणत्वं सम्यङ्निरूपितम्। तद्यथा—त्रीण्यात्मने-ऽकुरुतेति मनो वाचं प्राणः तान्यात्मनेऽकुरत अन्यत्रमना अभूवं नादर्शम्, अन्यत्रमना अभूवं नाश्रौषम् इति मनसा ह्येव पश्यति मनसा शृणोति। कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीधीर्भीरित्येवं सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्च शब्दो वागेव सैषा ह्यन्तमायत्तैषा हि न, प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वायमात्मा वाङ्मयो मनोमयः प्राणमयः। त्रयो लोका एत एव वागेवायं लोकः मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः। त्रयो वेदा एत एव वागेव ऋग्वेदः मनो यजुर्वेदः, प्राणः सामवेदः। देवाः पितरो मनुष्या एत एव, वागेव देवाः, मनः पितरः प्राणो मनुष्याः। पिता माता प्रजैत एव, मन एव पिता, वाङ् माता, प्राणः प्रजा, विज्ञातं विजिज्ञास्यम् अविज्ञातमेत एव यत् किञ्च विज्ञातं वाचस्तद्रूपं वाग्धि विज्ञाता वागैवैनं तत् भूत्वाऽवति यत् किञ्च विजिज्ञास्यं

मनसस्तद्रूपम्, मनो हि विजिज्ञास्यं मन एवैनं तद् भूत्वाऽवति। यत् किञ्च अविज्ञातं प्राणस्य तद्रूपम्, प्राणो ह्यविज्ञातः, प्राण एवैनं तद् भूत्वाऽवति, तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः, तद् यावत्येव वाक् तावती पृथिवी तावानयमग्निः। अथैतस्य मनसो द्यौः शरीरं, ज्योतीरूपमसौ आदित्यः तद्यावदेव मनस्तावती द्यौः, तावानसौ आदित्यः तौ मिथुनं समेताम्, ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद। अथैतस्य प्राणस्यापः शरीरम् ज्योतीरूपम् असौ चन्द्रः तद्यावानेव प्राणस्तावत्य आपः, तावानसौ चन्द्रः, त एते सर्व एव समाः सर्वे अनन्ताः स यो हैतानन्तवत उपास्ते अन्तवन्तं स लोकं जयति, अथ यो हैताननन्तानुपास्तेऽनन्तं स लोकं जयति, स एष सम्वत्सरः प्रजापतिः षोडशकलः, यो वै स संवत्सरः प्रजापतिः षोडशकलः। अथ त्रयो वाव लोका इति। अथातः सम्प्रत्तिः यदा प्रैष्यन् मन्यतेऽथ पुत्रमाह त्वं ब्रह्म, त्वं यज्ञः त्वं लोक इति, स पुत्रः प्रत्याह—अहं ब्रह्म, अहं यज्ञः अहं लोक इति, यद् वै किञ्चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता, ये वै के च यज्ञास्तेषां सर्वेषां यज्ञ इत्येकता। ये वै के च लोकास्तेषां सर्वेषां लोक इत्येकता एतावद् वा इदं सर्वं एतन्मा सर्वं सन्नयमितोऽभुनजदिति तस्मात् पुत्रम् अनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति स यदेवंविदस्मात् लोकात् प्रेत्याथैभिरेव प्राणैः सह पुत्रमाविशति स यद्यनेन किञ्चिदक्ष्णयाऽकृतं भवति। तस्मादेनं सर्वस्मात् पुत्रो मुञ्चति, तस्मात् पुत्रो नाम। स पुत्रेणैवाऽस्मिँल्लोके प्रतितिष्ठति। अथैनमेते देवाः अमृता आविशन्ति, पृथिव्यै चैनम् अग्नेश्च दैवी वागाविशति। सा वै दैवी वाग्, यया यद् यदेव वदति, तत् तद् भवति। दिवश्चैनमादित्याच्च दैवं मन आविशति, तद् वै देवं मनो येनानन्द्येव भवति। अथो न शोचति। अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति, स वै दैवः प्राणो यः सञ्चरंश्चासञ्चरंश्च न व्यथते अथो न रिष्यति स एवंवित् सर्वेषां भूतानामात्मा भवति, यथैषा देवतैवं स यथैतां देवतां सर्वाणि भूतान्यवन्ति। यदु किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद् भवति पुण्यमेवामुं गच्छति न है वै देवान् पापं गच्छति। अथातो व्रतमीमाँसा-प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्यन्योन्येनास्पर्धन्त। वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रम्, एवमन्यानि कर्माणि यथाकर्म तानि मृत्युः श्रमो भूत्वोपयेमे तान्याप्नोत् तान्याप्त्वा मृत्युरवारुन्धत्। तस्माच्छ्राम्यत्येव वाक् श्राम्यति चक्षुः श्राम्यति श्रोत्रम् अथेममेवानाप्नोद् योऽयं मध्यमः प्राणः तानि

ज्ञातुं दध्रिरे। अयं वै नः श्रेष्ठो सञ्चरंश्चासंश्चरंश्च न व्यथते। अथो न रिष्यति। हन्तास्यैव सर्वे रूपमसामेति। त एतस्यैव सर्वे रूपम् अभवन्। तस्मादेत एतेन आख्यायन्ते प्राणा इति। तेन ह वा व तत्कुलमाचक्षते। यस्मिन् कुले भवति स एवं वेद य उ हैवंविदा स्पर्धते अनुशुष्यति। अनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम्।

अथाधिदैवतं ज्वलिष्याम्येवाहमिति अग्निर्दध्रे, तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमाः। एवं अन्या देवताः यथादैवतम्। स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्निम्लोचन्ति ह्यन्या देवता न वायुः सैषा अनस्तमिता देवता यद् वायुः। अथैष श्लोको भवति। यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति। प्राणाद् वा एष उदेति प्राणे अस्तमेति तं देवाः चक्रिरे धर्मम्। स एवाद्य स उ श्व इति। यद्वा एते अमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति। तस्मादेकमेव व्रतं चरेत्। प्राण्यच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवद् इति यद्युच्चरेत् समापिपयिषेत्तेनो एतस्यैव देवतायै सायुज्यं स- लोकतां जयति। त्रयं वा इदं नामरूपं कर्म तेषां नाम्नां वागित्येतदेषामुक्थम्। अतो हि सर्वाणि नामानि उत्तिष्ठन्ति। एतदेषां साम एतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्म एतद्धि सर्वाणि नामानि बिभर्ति, अथ रूपाणां चक्षुरित्येतत् एषामुक्थमतो हि सर्वाणि रूपाणि उत्तिष्ठन्त्येतदेषां सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्म एतद्धि सर्वाणि रूपाणि बिभर्ति अथ कर्मणा मात्मेत्येतदेषामुक्थम्, अतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषां साम एतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्म एतद्धि कर्माणि बिभर्ति, तदेतत् त्रयं सदेकमयमात्मा एकस्सन्नेतत् त्रयं तदेतदमृतं सत्येन च्छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्न इति"। एवं सर्वत्र त्रिपुराप्रपञ्चो दृश्यते।

**'अनुत्तरानन्दचितिरिच्छाशक्तिनियोजिता ।**
**त्रिकोणमिति तत् प्राहुर्निसर्गामोदसुन्दरम् ।।**

**मेय-मातृ-प्रमा-मान-प्रसरैः सङ्कुचत्प्रभम् ।**
**शृङ्गाररूपमापन्नमिच्छाज्ञानक्रियात्मकम् ।।'** इति।

शृङ्गाररूपं त्रिकोणमित्यर्थः। विरूपाक्षपञ्चाशिकायामपि—एतदेव बिन्दुचक्रं यदा विकासभावमयते तदा त्रिकोणचक्रम् उदेती'ति। कामकलाविद्यायाम्—'मध्यं चक्रस्य स्यात् परामयं बिन्दुतत्त्वमेवेदम्। उच्छूनं तच्च यदा त्रिकोणरूपेण परिण्क्तं स्पष्टम्। एतत् पश्यन्त्यादित्रितयनिदानं त्रिबीजरूपं चे'ति। अयमर्थः—

चक्रस्य नवयोन्यात्मकस्य मध्यं मध्योद्भवं बिन्दुतत्त्वमिदं स्वसाक्षात्कृतं परामयमेव पराशक्तिस्वरूपमेव। उच्छूनं तच्च यदेति। यदा यस्मिन् काले प्राण्यदृष्टवशात् उच्छूनं तच्च बैन्दवं सञ्जात-विकासं भवति, तदा त्रिकोणरूपेण अनुत्तरानन्देच्छाशृङ्गार (सङ्घट्ट) रूपेण परिणतं त्रिकोणाकारं भवतीत्यर्थः। एतत् त्रिकोणचक्रं पश्यन्त्यादि-त्रितय-निदानं पश्यन्ती-मध्यमा-वैखरीप्रमुखशक्तित्रयोत्पत्ति-कारणमित्यर्थः। त्रिबीज-रूपञ्चेति। त्रिबीजानि त्रिखण्डात्मक-वाग्भव-कामराज-शक्तिबीजानि। तेषां बीजानां रूपं यस्य तत् तथेति। परा वाग् बिन्दुरूपा। सैव पश्यन्त्यादि-कारणमिति तत्र तत्र श्रूयते। यथा विश्वलहरीस्थानमातृत्रयात्मकं बैन्दवं चक्रमिति सुभगोदयवासनायाम्—

**'इच्छादिशक्तित्रितयं पशोः सत्त्वादिसंज्ञितम् ।**
**महात्र्यश्रं भावयामि गुरुवक्त्रादनुत्तरात् ।।'इति।**

प्रत्यभिज्ञायामपि—

**'स्वाङ्गरूपोष्मभावेषु पत्युर्ज्ञानं क्रिया च या ।**
**मायातृतीये त एव पशोः सत्त्वं रजस्तमः ।।'**

इति इच्छाज्ञानक्रियाशक्तय एव पश्यन्त्यादिशक्तित्रयात्मतापन्नाः। तदाह—

**'इच्छा रेखामया विश्वस्थिता प्रमितविग्रहा ।**
**तत्संहृतिदशायां च बैन्दवं रूपमास्थिता ।।**

**प्रत्यावृत्तिक्रमेणैव शृङ्गारवपुरुज्ज्वला ।**
**क्रियाशक्तिस्तु कापीयं वैखरी विश्वविग्रहा ।।'इति।**

श्रीतन्त्रसद्भावेऽपि—

**'या सा तु मातृका लोके परतेजःसमन्विता ।**
**तया व्याप्तमिदं सर्वमाब्रह्मभुवनान्तरम् ।।'**

इत्यारभ्य—

**'एकैवेत्थं परा शक्तिः त्रिधा सा तु प्रजायते ।'**

इत्यन्तेन पराशक्त्यात्मकं पश्यन्त्यादिशक्तिजालनिरूपणं कृतम्। तत्तु तत एवावधार्यम्। इह तु ग्रन्थविस्तरभीत्या न लिखितम्। श्रुतिरपि,

**'परास्य शक्तिर्विविधैव श्रूयते**
**स्वाभाविकी ज्ञानबलक्रिया च ।**

**ते ध्यानयोगानुगता अपश्यन्**
**देवात्मशक्तिं सगुणैर्निगूढाम् ।।'** इति।

यः सर्वान् लोकान् ईशते ईशनीभिरिति जननीभिः परमशक्तिभिः अभिन्नां पराशक्तिम् इच्छाज्ञानक्रियारूपां स्तौति। आगमश्च **'स्वरूप-ज्योतिरेवान्तः परा वाक् अनपायिनी यस्यां दृष्टस्वरूपायां ममकारो निवर्त्तते'** इति। लघुभट्टारकश्च—

**'सा त्वं काचिदचिन्त्यरूपमहिमा शक्तिः परा गीयते'** इति।

सैषा परा ध्वनिरूपा तु पश्यन्ती द्योतितार्था। मध्यमा श्रुतिगोचरा। वैखरी नामाखिलवर्णरूपिणी। एतत् तापिन्यामुदाहृतम्। **'तान्येव परा पश्यन्ती मध्यमा श्रुतिगोचरा। मध्यमा द्योतितार्था हि पश्यन्ती ध्वनिः परा चेत्येवमर्थ इति।'**

सुभगोदयवासनायां च–

**'पराभूज्जन्म पश्यन्ती.........समुद्भवा ।**
**मध्यमा सौरभा वैखर्यक्षमाला जयत्यसौ ।।'**

चिदानन्दवासनायामपि—

'विवक्षा अध्यवसायोक्तिरूपा एतास्त्रिमातरः। पश्यन्त्यादि महादेव' इति। कामकलाध्याने चक्रदैवतयोरैक्यं प्रतिपाद्यते। यथा—

**'या सान्तरोहरूपा परा महेशी त्रिभाविता सैव ।**
**स्पष्टा पश्यन्त्यादित्रिमातृकात्मा च चक्रतां याता ।।**

**चक्रस्यापि महेश्या न भेदलेशो विभाव्यते विबुधैः ।**
**अनयोः सूक्ष्माकारा परैव सा स्थूलयोर्न कापि भिदा ।।'** इति।

तथा च वामकेश्वरतन्त्रे—

**'तच्छक्तिपञ्चकं सृष्ट्वा लयेनाग्निचतुष्टयम् ।**
**पञ्चशक्ति-चतुर्वह्नि-संयोगाच्चक्रसम्भवः ।।**

**एतच्चक्रावतारं तु कथयामि तवानघे ।**
**एषा सा परमा शक्ति..........।।'**

इत्युपक्रम्य,

**'चक्रं कामकलारूपं प्रसारपरमार्थतः ।।'**

इत्यन्तेन सम्यगभेदः प्रतिपादितः। चक्रस्य कामकलारूपत्वं बिन्दुत्रयात्मकत्वं मण्डलत्रयरूपत्वादिति ज्ञेयम्। तदुक्तम्—

'त्रिखण्डं मातृकाचक्रं सोमसूर्याऽनलात्मकम्।' इति।

रहस्याम्नायेऽपि—

'बीजत्रयात्मकं स्वात्मशृङ्गारं विद्धि सुन्दरम् ।
मिश्रं शुक्रं च रक्तं च पुराणं प्रणवात्मकम् ।।
रेखात्रयावगन्तव्यं संवित् साम्बशिवात्मकम् ।'
इत्यादि 'तयोर्मिश्रं संयोगे निर्वाणं निर्मलमि'त्यन्तेन प्रोक्तम् ।

चतुःशत्यां तु—

'कूटत्रयात्मिकां देवीं समष्टिव्यष्टिरूपिणीम् ।
आद्यां शक्तिं भावयन्तो भावार्थ इति मन्त्रतः ।।' इति।

कामकलाध्याने—

'माता मानं मेयं बिन्दुत्रयाऽभिन्नबीजरूपाणि ।
धामत्रय-पीठत्रय-शक्तित्रयभेदभावितान्यपि च ।।
तेषु क्रमेण लिङ्गात्त्रितयं तद्वच्च मातृकात्रितयम् ।
इत्थं त्रितयपुरीया तुरीयपीठा च भेदिनी विद्या ।।' इति।

प्रत्यभिज्ञायामपि—

'अखण्डितस्वभावोऽपि विचित्रां मातृकल्पनाम् ।
स्वहृन्मण्डलचक्रेयं प्रथयेत्तं नमः शिवम् ।।' इति।

चतुःशत्याम्—

'अतीतं तु परं तेजः स्वसंविद्देवतात्मकम् ।
स्वेच्छाविश्वमयोल्लेखखचितं विश्वरूपकम् ।
चैतन्यमात्मनो रूपं निसर्गानन्दसुन्दरम् ।।
मेय-मातृ-प्रमा-मानप्रसरैः सङ्कुचत्प्रभम् ।' इति।

एवं सर्वातीता सच्चिदानन्दघनलक्षणा परदेवता सृष्टिसमये त्रिप्रकारा सती त्रिकोणाकारतां प्राप्तेत्यर्थः ।

मातृकैव त्रिकोणात्मतया परिणतेति कथयति—

**'यत्राकथे'**ति। यत्र पुरत्रयाख्ये त्रिकोणचक्रे, अ-क-थाः अकार-ककार-थकारादयः वर्णाः षोडशधा विभक्ताः। अकारादिस्वराः षोडश, कादितान्ताः षोडश, थादिसान्ताः षोडश, एवं षोडशत्रिकम्। एवं विभक्ता अक्षरा मातृकायाः

एकपञ्चाशद् वर्णाः कोणस्थ-हल-क्षसहिता इति शेषः। सन्निविष्टाः ऋजुरेखाकारेण प्रविष्टा इत्यर्थः। **'ऋजुरेखामयी विश्वस्थितौ प्रथितविग्रहा'** इत्युक्तत्वात्। तथा च पादुकापञ्चरत्नस्तुतौ—

> **'तत्र कन्दलितकर्णिकापुटे**
> **क्लृप्तरेखमकथदिरेखया ।**
> **कोणलक्षित-ह-ल-क्षमण्डलं**
> **भावलभ्यमनलालयं भजे ।।'** इति।

अन्यत्रापि—'अ-क-थादित्रिरेखात्मा हलक्षा....बुध' इति। तथा च महोपनिषदि—**'त्रिपीठमध्यवर्त्तिनीम् अकथादित्रिपीठेशीं परां चित्कलां महात्रिपुरसुन्दरीं ध्यायेदि'ति।** तापिन्यामपि- **'अकथादित्रिरेखाशब्दित-त्रिकोणमेव श्रीगुरोः सदनमि'ति।** तैत्तिरीयकशाखायां च—'चित्रावसो स्वस्तित' इत्युपक्रम्य 'स त्वमग्ने सूर्यस्य वर्चसा' इति। श्रीतन्त्रसद्भावे—

> **'सर्वे वर्णात्मका मन्त्रा देवः शक्त्यात्मकः प्रिये! ।**
> **शक्तिस्तु मातृका ज्ञेया मातृका तु शिवात्मिका ।।**
> **या सा तु मातृका लोके परतेजःसमन्विता ।**
> **तया व्याप्तमिदं सर्वमाब्रह्मभुवनान्तरम् ।।'** इति।

एवम् अधिष्ठानं प्रपञ्च्याधिष्ठात्रीं कथयति—

**'अधिष्ठायैना' इति।** अधिष्ठाय अवष्टभ्य एनाः पूर्वोक्ताः तिस्रः पुरः। अजरा अपक्षयरहिता, पुराणी जन्मरहिता। आद्यन्तशून्येत्यर्थः। यद्वा अजरा पुराणीति विशेषणद्वयम् तदैतरेषामुपलक्षणम्। तस्मात् षड्भावविकार-रहितेत्युक्तं भवति। तथा च श्रुतिः—

> **'न जायते म्रियते वा विपश्चिद्**
> **नायं कुतश्चिन् न बभूव कश्चित् ।**
> **अजो नित्यः शाश्वतोऽयं पुराणो**
> **न हन्यते हन्यमाने शरीरे ।।'**

इति। अथर्वशिरसि **'यस्याः स्वरूपं ब्रह्मादयो न जानन्ति तस्मादुच्यते-ऽज्ञेया। यस्या अन्तो न विद्यते तस्मादुच्यतेऽनन्ता। यस्या ग्रहणं नोपलभ्यते तस्मादुच्यतेऽलक्ष्या। यस्या जननं नोपलभ्यते तस्मादुच्यते अजा। एकैव सर्वत्र वर्तते तस्मादुच्यते एका। एकैव विश्वरूपिणी तस्मादुच्यते नैका। अत एवोच्यतेऽज्ञेयाऽनन्ताऽलक्ष्याऽजैका नैके'ति।**

**महत्तरा** 'महदि'ति महत्तत्त्वम्, ततोऽधिका महत्तरा। महच्छब्दग्रहणम् अव्यक्ताऽहङ्कारयोरप्युपलक्षणम्। त्रिकोणस्य महाकामेश्वर्यादिदेवता उच्यन्ते। तथा च भावनोपनिषदि—'अव्यक्त-महदहङ्काराः कामेश्वरी-वज्रेश्वरी-भगमालिन्योऽन्तस्त्रिकोणाग्रगा देवता' इति। त्रिकोणमध्यस्थिता इति भावः। बिन्दुपीठेश्वरी पञ्चब्रह्ममञ्चवासात् महत्तरेत्यर्थः। महत्तरत्वमेव साधयति—

**'महिमा देवताना'**मिति। महिमा पूज्या, कासाम्? देवतानाम्, त्रिकोणाऽग्रस्थमहाकामेश्वर्यादीनाम्, शिवादि-क्षित्यन्तषट्त्रिंशत्तत्त्वदेवतानां चेत्यर्थः। एषा त्रिपुरा भगवती महोपनिषदि श्रूयते। 'अथैतस्मिन्नन्तरे भगवान् प्राजापत्यं वैष्णवं विलयकारणरूपमाश्रित्य 'त्रिपुराभिधा भगवती'त्येवमादि-श्रुत्या भूर्भुवस्वस्त्रीणि पुराणि स्वर्ग-मध्य-पातालाख्यानि ह्रीन्मयात्मकेन ह्रीङ्कारेण हृल्लेखास्या भगवती त्रिपुराभिधा त्रिकूटावसाने निलये धाम्नि महसा घोषेण व्याप्नोति। सैवेयं भगवती त्रिपुरेति प्रपद्यते। क्रोधभट्टारकाश्च—

> **'देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वराः**
> **त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्मवर्णास्त्रयः ।**
> **यत् किञ्चित् जगति त्रिधा नियमितं वस्तु त्रिवर्गात्मकं**
> **तत् सर्वं 'त्रिपुरे'ति नाम भगवत्यन्वेति ते तत्त्वतः ।।' इति।।१।।**

**श्रीभास्करारायप्रणीतभाष्यम्—**

> **'सहस्रदलपद्मे श्रीनाथाङ्घ्र्यब्जद्वये सति ।**
> **कमले कमलोत्पत्तिर्न दृष्टेत्युक्तयः कथम् ।।१।।**
>
> **श्रीसाङ्ख्यायनकल्पसूत्रविधिभिः कर्माणि ये कुर्वते**
> **येषां शाकल एव मन्त्रनिचयः कौषीतकं ब्राह्मणम् ।**
> **तैरारण्यकमध्यमन्त्रविततिर्या पठ्यते बह्वृचैः**
> **ऋग्भिः षोडशभिर्महोपनिषदं व्याचक्ष्महे तां वयम् ।।२।।'**

इह खलु त्रैवर्णिकैरध्येतव्यो वेदः पूर्वोत्तरकाण्डभेदेन द्विविधः। स उभयविधोऽपि साक्षात् परम्परया वा क्रियाविशेषविधानाय प्रवृत्तः। क्रियाश्च काश्चित् सदेवताकाः, काश्चिददेवताका अग्निहोत्रस्नानादयो रामकृष्णोपास्तियोषिदग्न्याद्युपास्त्यादयश्च। अधिकारिणस्तु देहातिरिक्त आत्मा परलोकयातायातक्षमोऽस्तीति विश्वासशीला एवामुष्मिकफलक्रियासु यथाऽधिक्रियन्ते तथा तेष्वपि देवतानामस्मदादिभिरदृश्यमानानामपि अभिमत-फलदानक्षमा शक्तिः काचिदस्तीति विश्वासशीला एव रामकृष्णाद्युपास्तावधिक्रियन्ते। ईदृशजनाभि-

प्रायेणैव देवतानां विग्रहादिकं समर्थितं वादरायणादिभिः। येषां तु देवतासद्भावे जन्मान्तरकर्मवशादनाश्वास आस्तिकता च ते पूर्वकाण्डोक्तकर्मस्वेवाधिकारिणो न देवतोपासनायाम्। तादृशजनाभिप्रायेणैव देवतानां विग्रहादिपञ्चकनिरासेन कर्मप्राधान्यवादः समर्थितो जैमिन्यादिभिः। अत एव तादृशकर्मठानामेव कर्मपरिपाकवशात् कतिपयानां शिवशक्तिपूजायां प्रवृत्तौ सत्यां मीमांसकमत-परित्यागप्रयुक्त उपहासो वृत्तौ वर्णितो मृगेन्द्रसंहितायाम्। ये तु देवतोपासकास्तैरपि विग्रहादिपञ्चकापह्नवाभिप्रायरहस्यं जानानैरपि कर्मप्राधान्यवादो न निरसनीयः। तथात्वे तादृशकर्मठानां चित्तपरिपाकविशेषमन्तरेण समर्थ्य-मानार्थे विश्वासानुदयात्। निरसनयुक्तिभिस्तदवलम्बितार्थे सन्देहोदये तु तेषामुभयभ्रष्टतापत्तेः। अत एव तेषां संरक्षणार्थमेवोपासकैरपि तानि कर्माणि तद्वदेव सविश्वासमिव कार्याण्येव। एतदभिप्रायेणैव—

**'लोकसंग्रहमेवापि सम्पश्यन् कर्त्तुमर्हसि'** इत्यादयो विधयः,

**'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्'** इत्यादयो निषेधाश्च। उत्तरभूमिकाधिरूढैरपि पूर्वभूमिकायाः समर्थनं स्वभूमिकाया अप्रकाशनं चावश्यं कार्यमिति पिण्डितोऽर्थः। तेनेतौ विधिनिषेधौ निस्त्रैगुण्ये पथि विचरतां जीवन्मुक्तानामप्यावश्यकाविति सिद्ध्यति। येषां तु बहुजन्मसु पूर्वकाण्डोक्तकर्मानुष्ठानवशाच्चित्त-परिपाको दृढो दृश्यते तादृशान् प्रति तु सम्यक् परीक्ष्य स्वभूमिका शनैः शनैः प्रकाशनीयैव, अन्यथा सम्प्रदायविच्छेदापत्तेः। त्रिपुरसुन्दर्युपास्तिपर्यन्ता ये भूमिकाभेदास्ते तु संविस्तारं वामकेश्वरतन्त्रव्याख्याने सेतुबन्धेऽस्माभिः प्रदर्शिताः। उपासनाशास्त्रे तु देवताप्राधान्यवाद एव, न कर्मणः प्राधान्यम्। क्रिया-प्राधान्याभावादेव देवतारूपसिद्धवस्तुबोधका वेदान्ता इति वाचोयुक्तिः। देवतायाश्च त्रीणि रूपाणि स्थूलं सूक्ष्मं परञ्चेति। तत्राद्यं तत्तद्ध्यानश्लोकोक्तम्, द्वितीयन्तत्तन्मूलमन्त्रात्मकम्, तृतीयन्तूपासनात्मकम्। देवतारूपत्रैविध्यात्तदुपास्तिरपि त्रिविधा बहिर्यागजपान्तयोगभेदात्। तदिदं सपरिकरमृग्वेदपुरुषो महोपनिषद्रूपेणोप-दिशति **'तिस्रः पुर'** इत्यादिनेत्युपनिषदित्यन्तेन। अस्या उपनिषदः परदेवतास्तुतौ विनियोगस्तृतीयदशमर्चमन्त्रलिङ्गात्। तत्र प्राधान्येन देवतां निर्देष्टुं प्राथमिकीमृचमाह-तिस्रःपुरस्त्रिपुरेति।

मुक्तिस्तावत्पञ्चविधा सालोक्यमेकं सामीप्यसारूप्यसायुज्यत्रितयं कैवल्यं चेति। तास्वाद्यान्त्ये प्रत्येकं द्वौ मार्गौ, मध्यमत्रयमेको मार्गः। तथा च तैत्तरीया आमनन्ति—**'य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं**

शिवशक्तिसम्पुटात्मकं पञ्चविंशतितत्त्वविलक्षणं षड्विंशं तत्त्वं यस्तु वेत्ति स विद्वान्, इह च इह लोके पूजातारतम्यवशात् अमुत्र च परलोके सार्ष्टिसालोक्यसामीप्यसारूप्यात्मिकया पञ्चविधया मुक्त्या अन्वेति युज्यते।

अथ देवासुरोभयज्ञानोपायमाहुः—

**'यत् कुमारी मन्द्रयते यद्योषित् यत् पतिव्रता ।**
**अरिष्टं यत् किं च क्रियते अग्निस्तदनुवेधति ।।'**

**अयमर्थः**—कुण्डलिन्याः शक्तेः अवस्थात्रयं विद्यते। यत् यस्मिन् चक्रे, कुमारी कुमारावस्थापन्ना प्रथमं सुप्तोत्थिता मन्द्रयते मन्द्रस्वरं करोति कुण्डलिन्याः सर्पाकारत्वात्। सर्पो हि सुप्तोत्थाने मन्द्रस्वरं करोति, तद्वदित्यर्थः। यदि योषित् यस्मिन् चक्रे कुलयोषित् विष्णुग्रन्थिपर्यन्तं गत्वा राति इति शेषः।

**'कुलयोषित् कुलं त्यक्त्वा राति विष्णोः प्रभेदनः'।**

इति सनत्कुमारवचनात्। यत् यस्मिन् चक्रे पतिव्रता पत्या सदाशिवेन सार्द्धं सहस्रदलकमले विहरमाणा रिष्टं शुभाभावः, 'रिष्टं क्षेमेशुभाभावः' इत्यभिधानात् तदन्यदरिष्टं शुभम् अमृतारवाद इत्यर्थः। यत्किञ्चित् क्रियते, तत् स्वाधिष्ठानगतोऽग्निरनुवेधति सहायं करोति। अतश्चाऽभ्यासवशात् वायुनाऽग्निं प्रज्वाल्य अग्निशिखानुविद्धविलीनचन्द्रमण्डलगलत्पीयूषधारानुभवे पञ्चविंशति-तत्त्वातीता परमेश्वरीति ज्ञातुं सुशकेत्युपदेशः।

चक्रविद्योपासनं वर्णिनाम् आश्रमिणां ज्ञानिनामज्ञानिनां च फलदायक-मित्यभिसन्धायाहुः—

**'अश्रृतासः श्रृतासश्च यज्वानो येऽप्ययज्वनः ।**
**स्वर्यन्तो नापेक्षन्ते ।।'**

अयमर्थः—'अश्रृतासः' अपक्वा अक्षपितान्तःकरणकल्मषा इत्यर्थः। 'श्रृतासश्च' पक्वाश्च। 'आज्जसेरसुगि'त्यसुगागमः। क्षपितान्तःकरणकल्मषा इत्यर्थः। 'यज्वानः' यजनशीलाः, त्रैवर्णिकाः आश्रमिणश्च। 'अयज्वनः' यागरहिताः शूद्रादयः, 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्त' इति श्रुतिस्त्रैवर्णिकैक-नियताधिकारयज्ञशब्दवाच्याऽग्निष्टोमादिपरा। चक्रविद्योपासने शूद्राणा-मप्यधिकारचोदनात्। निषाद-स्थपतिवद्[१] वैदिके कर्मण्यधिकारसिद्धेर्न न काचित् क्षतिः। 'यन्तः' इण् गतौ। चक्रविद्यामवगन्तारः। 'स्वः' स्वर्गं नापेक्षन्ते।

१. 'एतया निषादस्थपतिं याजयेत्' इति विधिना निषादानामप्यधिकारादिति भावः।

चक्रविद्योपासनाव्यतिरेकेण देवतान्तरोपासनायामनिष्टमाहुः—

**'इन्द्रमग्निं च ये विदुः सिकता इव संयन्ति ।**

**रश्मिभिः समुदीरिता अस्माल्लोकादमुष्माच्च ।।'**

**अयमर्थः**—सुराऽसुरमुख्यवन्दितचरणारविन्दायाः सर्वान्तर्यामिन्याः सर्वव्यापिन्या जगदुत्पत्तिस्थितिलयहेतोश्चक्रविद्याया अन्यत्वेन ये इन्द्रमग्निं च, चकाराद् यमादिलोकपालान् पृथिव्यादिसदाशिवान्ततत्त्वानि च उपास्यत्वेन विदुः, ते सिकता इव बालुककणा इव संयन्ति परस्परं विरलाः परिभ्रष्टा भवेयुरित्यर्थः। किञ्च—रश्मिभिः यमपाशैः उत्तरप्रबन्धे 'अपेत वीते'त्यादौ प्रतिपादितैः समुदीरिताः संयताः बद्धा भवेयुः। किञ्च-अस्माल्लोकादमुष्मात् लोकाच्च भ्रष्टा भवेयुरिति शेषः। अत एव श्रुत्यन्तरन्—

**'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते' इति।**

**अयमर्थः**—'अविद्यां' विद्याविरुद्धां ज्ञानमार्गविरुद्धामिन्द्रादिसेवां 'वाचं धेनुमुपासीते'त्येवमध्यारोपितसेवां च ये (कुर्वते) उपासते, ते अविद्वांसः अन्धं तमः प्रविशन्ति अन्धतामिस्रं प्रविशन्तीत्यर्थः। चकारः प्रकरण-समाप्तिद्योतकः।

'ऋषिभिरदात् पृश्निभिः' पृश्निनामकैः ऋषिभिरेतत् सर्वमदात् अदायि। कर्मणि लुङ्। छान्दसः कर्मणि प्रत्ययलोपः; कर्तृप्रत्ययव्यत्ययश्च। ऋषिभिः पृश्निभिरेवमुक्तमित्यर्थः। यद्वा पृश्निभिः सहितः ऋषिसंघ एवमदात्। वाचमिति शेषः। उक्तवानित्यर्थः। प्रदेशान्तरे—

**'सतद्वा अट्टारगमन्ता संहार्यन्नगरं तवेति'।** अस्यार्थः—सतद्वा चतुर्द्वारमित्यर्थः। छान्दसो वर्णलोपश्च। भगवत्यां श्रीविद्यायाम् अप्रतिहतस्वातन्त्र्यप्रभावात् अयं वेदः प्रतीकतयोपादानात् क्वचिन्मन्त्रस्यादिवर्णं गृह्णाति, क्वचिदन्त्यं क्वचिदुभयं क्वचिन्मध्यं क्वचिदधिकं क्वचिन्न्यूनम्। यथा 'चत्वारो मामशश्चारोस्त्रः' इत्यत्र भाष्यकारैरेवं भाषितम्। मशकवत् शत्रून् शृणातीति मशश्चोरः। अत्र मकारेण मशकपदं गृह्यते, रेफोऽधिको गृहीतः निरर्थकः। शृणातीति शारः। शृहिंसायामिति धातोः ततो मशकानि निष्पिनष्टीति मशकशब्दो राज्ञो विशेषणमिति। एवं बहुषु स्थलेषु दृश्यते। तथात्रापि। 'अट्टारगमम्' अट्टारैः प्राकारवलयैः त्रिभिरगमं दुर्गमम्, 'ता' तानीमानि भूतानि। भगवति! तव नगरं पुरं श्रीचक्रात्मकं संहार्यं संहारकमित्यर्थः। पृथिव्यादिमहेश्वरान्तानि तत्त्वानि तत्रैव लीयन्ते इति तात्पर्यम्। केचिदेवं व्याचक्षते संहार्यं संहारक्रमेण लेखनीयम् इति। तन्न, कौलमत एव संहारक्रमेण चक्रस्य लेखनीयत्वादिति। अत्र मेरुप्रस्तारकैलासप्रस्तारभूप्रस्तारास्त्रयः

सन्ति। 'मेरुप्रस्तारो' नाम नित्याषोडशी-तादात्म्यम्। कैलासप्रस्तारो नाम मातृकातादात्म्यम्। भूप्रस्तारो नाम वशिन्यादितादात्म्यम् इति शुभागमपञ्चके कथितम्। **शुभागमपञ्चकं नाम वासिष्ठसंहिता, सनकसंहिता, सनन्दनसंहिता सनत्कुमारसंहितेति संहिताः शुभागमपञ्चकम्।** तत्र वसिष्ठसंहितायां देवीं प्रति शिववचनम्—

**'श्रुणु देवि प्रवक्ष्यामि नित्याषोडशिकार्णवम् ।**
**न कस्यचिन्मया ख्यातं सर्वतन्त्रेषु गोपितम् ।।**

**तत्रादौ प्रथमा नित्या महात्रिपुरसुन्दरी ।**
**ततः कामेश्वरी नित्या नित्या च भगमालिनी ।।**

**नित्यक्लिन्ना तथा भेरुदण्डा वह्निवासिनी ।**
**महावज्रेश्वरी रौद्री त्वरिता कुलसुन्दरी ।।**

**नित्या नीलपताका च विजया सर्वमङ्गला ।**
**ज्वालामालिनिका चैव चित्रा नित्या तु षोडशी ।।**

**प्रतिपत्प्रभृति ता देव्यः पौर्णिमास्यन्तमर्चयेत् ।**
**एकादिवृद्धिदान्येव दर्शान्तं देवि विग्रहम् ।।'** इति।

षोडशनित्यास्तु अष्टवर्गात्मकतया अष्टदलपद्मे अष्टपत्रेषु स्थिताः। यथाक्रमम् अष्टकोणचक्रे प्रागादिकोणमारभ्य एकैकस्मिन् कोणे द्विकं द्विकमन्तर्भूतम्। एवमष्टद्विकानि अष्टकोणेष्वन्तर्भूतानि। एता एव नित्याः षोडशस्वरात्मकतया षोडशदलपद्मे स्थिता द्विदशारेऽन्तर्भूताः। एतासां नित्यानां मध्ये प्रथमनित्याद्वयं त्रिकोणबिन्दुरूपेण स्थितम्। अवशिष्टास्तु चतुर्दश नित्या मन्वश्रेऽन्तर्भूताः। मेखलात्रयभूपुरत्रये बैन्दवत्रिकोणयोरन्तर्भूते। एवं नित्यानां चक्रेऽन्तर्भावः। इममेवान्तर्भावं मेरुप्रस्तरमाहुः। अत एव चन्द्रकलाविद्यायाः श्रीचक्रविद्याया अङ्गत्वं नित्यानां सिद्धम्। सनन्दनसंदितायां ऋषीन् प्रति सनन्दनवचनम्। एतास्तु षोडशनित्याश्चन्द्रकलायाश्चक्रविद्याया अङ्गभूताः, एतास्तु षोडश नित्याः स्वरात्मिकाः। पञ्चदशाक्षरीमन्त्रगत-एकारादिभूत-अकारविसर्गात्मक-सकाराभ्यां संगृहीता जीवकलारूपा बैन्दवस्थाने स्थापितास्तत्रैवान्तर्भूताः। कादयो मावसानाः पाशाङ्कुशबीजयुक्ताः सन्तः अष्टारे दशकोणद्वये चाऽन्तर्भूताः। शिष्टास्तु यकारादयो नव वर्णा द्विरावृत्त्या मन्वश्रे चतुर्दशकोणेषु चतुर्दशारान्तर्भूताः। शिष्टं वर्णचतुष्टयं शिवचक्रचतुष्टयेऽन्तर्भूतम्। इममेव कैलासप्रस्तारमाहुः। एवं नित्यानां चक्रविद्यायां षोडशनित्यानामङ्गत्वं प्रतिपादितम्। सनत्कुमारसंहितायामपि

चक्रविद्यायां षोडशनित्यानामङ्गत्वं प्रतिपादितम्। यथा सनत्कुमारवचनम्—श्रीचक्राङ्गभूता नित्या वशिन्यादिभिः द्विकं द्विकं मेलयित्वा बैन्दव-त्रिकोणं विहायाऽष्टासु कोणेषु अन्तर्भाव्याः। मध्ये त्रिपुरसुन्दरी अन्तर्भाव्या। अष्ट वर्गाः अष्ट वशिन्यादयः। षोडश नित्याः। द्वादश योगिन्यः। चतस्रो गन्धाकर्षण्यादयः, एवं चतुश्चत्वारिंशद्देवता अन्तर्भाव्याः। अत्रैकां शक्तिं विहाय त्रयश्चत्वारिंशत्कोणेषु त्रयश्चत्वारिंशद् देवता अन्तर्भाव्याः। एकां त्रिपुरसुन्दरीं बैन्दवस्थानादधस्तात्। गन्धाकर्षिण्याद्याश्चतुर्द्वारेष्विति नित्यानामङ्गत्वं प्रतिपादितम्। इममेव भूप्रस्तरमाहुः। अत्र वशिन्याद्यष्टकम् वशिनी, कामेश्वरी, मोदिनी, विमला, अरुणा, जयिनी, सर्वेश्वरी, कौलिनीति षोडश नित्याः पूर्वमुक्ताः। योगिनीद्वादशकं च विद्यायोगिनी, रेचिकायोगिनी, अमृतायोगिनी मोचिकायोगिनी, दीपिकायोगिनी, ज्ञानयोगिनी, आप्यायनीयोगिनी, व्यापिनीयोगिनी, मेधायोगिनी, लोभरूपा योगिनी, सिद्धरूपा योगिनी, लक्ष्मीयोगिनी चेति। एवं द्वादश योगिन्यः। गन्धाकर्षिण्यादयश्चतस्रः। सेयं पञ्चाशद्वर्णात्मिका भवति। ते चाष्टवर्गाः अ क च ट त प यादयः शादयः। अकारादयः षोडश स्वराः प्रथमवर्गः। कादयः पञ्च द्वितीयः। चादयः पञ्च तृतीयः। टादयः पञ्च चतुर्थः। तादयः पञ्च पञ्चमः। पादयः पञ्च षष्ठः। यादयश्चत्वारः सप्तमः। शादयः पञ्च अष्टमः। एवं अष्टवर्णात्मिका भगवती मातृका त्रिपुरसुन्दरी। अ क च ट त प य श वर्गेषु यथाक्रमं वशिन्यादि-शक्तिभिर्योजिता **बिन्दुत्रिकोणात्मकशिवचक्रचतुष्टयवसुकोणदशारद्वितय-चतुर्दशकोणात्मकेषु अष्टसु चक्रेषु योजिता ध्याता सती कार्यकर्तृत्वसम्पादिका।** एवं द्वादशयोगिनीभिः सार्धं वशिन्याद्यष्टकं मिलित्वा विंशतिकला भवन्ति। ता विंशतिकलाः शुद्धस्फटिकसङ्काशाः दशारयुग्मकोणेषु सञ्चिन्तनीयाः। तथा च श्रुतिः—

**'गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।**
**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।।'** इति।

**अयमर्थः**—'गन्धद्वाराम्' गन्ध-रस-रूप-स्पर्शा 'गन्ध' शब्देन सङ्गृहीताः। तेन गन्धाकर्षिण्यादयोऽधिदेवताः सङ्गृहीता भवन्ति। गन्धाकर्षिणी, रसाकर्षिणी, रूपाकर्षिणी, स्पर्शाकर्षिणी चेति। ताभिर्युक्तानि चतुर्द्वाराणि यस्याः सा गन्धद्वारा ताम्। 'दुराधर्षाम्' दुष्प्रधर्षाम्, मन्दभाग्यानामिति शेषः। 'नित्यपुष्टाम्' नित्यानन्दस्वरूपिणीम्। 'करीषिणीम्' गन्धाद्याकर्षिणीमित्यर्थः। यद्वा—करिभिः गजैः ईषिणीं परिवृताम्। 'ईश्वरीम्' अधिदेवतां सर्वभूतानाम्। तामिह चक्रे

उपह्वये 'श्रियम्' विद्याम्। गन्धद्वारामिति गन्धाकर्षिणीचतुष्कम्, वशिन्याद्यष्टकम्, योगीनीनां द्वादशकं सङ्गृहीतम्। तथा च शम्भुवाक्यम्—

**'मातृकां वशिनीयुक्तां योगिनीभिः समन्विताम् ।**
**गन्धाद्याकर्षिणीयुक्तां संस्मरेत् त्रिपुराम्बिकाम् ।।'** इति।

**अत्रेदमनुसन्धेयम्**—वशिन्यादयः शक्तयः, पञ्चाशद्वर्णात्मिका इत्युक्तम्। तत्र वशिनीशक्तिः स्वरात्मिका। स्वराः षोडश अकारादयः। तेषां स्वरूपं सनत्कुमारसंहितायां पञ्चशत्यामुक्तम्। अत्र सङ्क्षेपेण कथ्यते। अकारात्मिका शक्तिरष्टभुजा पाशाङ्कुश-वराऽभय-पुस्तकाऽक्षमाला-कमण्डलु-व्याख्या-मुद्राकरा। एवकाराद्यात्मिकाः शक्तयः शुक्लवर्णाः। इयांस्तु विशेषः। अकारात्मिकायाः शक्तेर्मण्डलमशीतिलक्षयोजनायतम्। आकारस्य तद्द्विगुणम्। इकारस्य नवतिलक्ष-योजनायतम्। ईकारस्य तद्द्विगुणम्। उकारस्य कोटियोजनपरिमितपरिणाहं मण्डलम्। ऊकारस्य तद्द्विगुणम्। ऋकारस्य पञ्चाशल्लक्षयोजनपरिमितं मण्डलम्। तद्द्विगुणं ॠकारस्य। तद्द्विगुणं ऌकारॡकारयोरपि। एवमेकारस्य सार्धकोटिपरिणाहं मण्डलम्। ऐकारौकाराणां सममेवैकारेण। बिन्दुविसर्गयोस्तु अकाराद्द्विगुणं मण्डलम्। व्यञ्जनशक्तीनामकारमण्डलादर्धं मण्डलम्। ताः शक्तयः पाशाऽङ्कुशाऽक्षमाला-कमण्डलुधराः। अन्तःस्थास्तु पाशाऽङ्कुशाऽभयवरकराः। ऊष्माणस्तु पाशा-ऽङ्कुशाक्षमाला-वर-कराः। क कार-क्षकारौ पाशाङ्कुशैक्षव-शरासन-पुष्प-बाणकरौ। एताः शक्तयः पञ्चाशद्वर्णात्मिकाः। केचित् तु स्वरात्मिकाः शक्तयः स्फटिकाभाः। कादयो मावसाना विद्रुमाभाः। यादयो नव पीतवर्णाः। क्षकारः अरुणवर्ण इति। लकारस्तु लकार एवान्तर्भूतः। एवं वशिन्यादिमाहात्म्यं भूप्रस्तारे प्रतिपादितम्।

अत्र प्रस्तारत्रये निम्नरेखः भूप्रस्तारः पातालवासिनां पूज्यः। मर्त्यलोकवासिनां तु ऊर्ध्वरेखः कैलासप्रस्तारः। क्रमोन्नतो मेरुप्रस्तारः स्वर्गलोकवासिनां पूज्यः।

**'पातालवासिनां देवि! प्रस्तारो निम्नरेखकः ।**
**ऊर्ध्वरेखो महेशानि मर्त्यलोकनिवासिनाम् ।।**
**स्वर्गलोकनिवासिनां यन्त्राणां मेरुसंज्ञकम् ।।**
**भूपुरं तु समारभ्य बैन्दवान्तं महेश्वरि! ।**
**क्रमात् समुन्नतं सर्वं मेरुरूपं मयोदितम् ।।**
**गोपितव्यं त्वया भद्रे! स्वगुप्तमिव सन्ततम् ।।'** इति।

त्रिपुरतापिन्यां श्रीचक्रलक्षणमुक्तम्। तद्यथा—'अथ याज्ञवल्क्य इति होवाच शृणु सौम्यादौ विद्यायाः पुरं वक्ष्यामि अक्षरसङ्ख्यया। तत् कथम्? दशारद्वयमन्वष्टदलस्वरूपत्रिवृत्तवेदाश्रयुतं श्रीपुरम्, तस्याः प्रतिविधिसंख्येति। एवं शिवशक्त्यात्मकमधिष्ठानं श्रीचक्रं सप्रपञ्चं प्रतिपाद्य अधिष्ठानाधारकामेश्वरौ प्रतिपादयति। **'अथ प्रथते मदनो मदनी'**ति। अत्र नवावरणविशिष्टश्रीचक्र-मध्यत्रिकोणमध्यवर्तिसर्वानन्दमयबिन्दुपीठोपरि पञ्चब्रह्ममहामञ्चे इत्यर्थः। तद्बिन्दुना च प्रथते वर्धते सौन्दर्यद्युतिः येनेति शेषः। तथा चोक्तं तापिन्याम्—'अथेयमेतेषां ब्रह्मादीनां कलाः सङ्गृह्य मञ्चाकारं कृत्वा तन्मञ्चं सर्वानन्दमयचक्रे संस्थाप्य स्वस्याः क्रीडार्थमवशिष्टं ब्रह्मकामेश्वररूपं स्वमायया कृत्वा तं कामेश्वरमञ्चोपरि संस्थाप्य कामेश्वरस्य वामाङ्कपर्यङ्के स्थितवत्यासीदिति। कौ ताविति अहं मदनो मदनी'ति। स्वसौन्दर्यातिशयेन पराशक्तिं मदयतीति मदनः कामेश्वरः। मदनात् कामेश्वरात् अनपेता मदनी। तदभिन्नेति यावत्। चकारोऽध्याहर्तव्यः। मदनो मदनी चेति। तौ दिव्यदम्पती सर्वानन्दमयचक्रे पञ्चब्रह्मासने सर्वोत्कृष्टतया वर्तेते इति शेषः। लोकातिशायिसौन्दर्यात् तयोः अन्योन्यानुरागवशादेकीभूतौ विराजेत इति भावः। तथा ललितोपाख्याने प्रतिपादितम्—

**'तां दृष्ट्वा मृगशावाक्षीं कुमारो नीललोहितः ।**
**अभवन् मन्मथाविष्टो विस्मृत्य सकलाः क्रियाः ।।**

**साऽपि तं वीक्ष्य तन्वङ्गी मूर्तिमन्तमिव स्मरम् ।**
**मदनाविष्टसर्वाङ्गी स्वानुरूपममन्यत ।।**

**अन्योन्यालोकनासक्तौ तावुभौ मदनाकृती ।**
**सर्वभावविशेषज्ञौ श्रुतिमन्तौ मनस्विनौ ।**
**परैरज्ञातचारित्रौ मुहूर्तास्वस्थचेतनौ ।'** इति।

रुद्रयामले च—

**'पुरत्रयं च चक्रस्य सोम-सूर्याऽनलात्मकम् ।**
**महालक्ष्म्याः पुरं चक्रं तत्रैवास्ते तथा शिवः ।।'** इति।।५।।

**श्रीभास्कररायप्रणीतभाष्यम्—**

नवमं भूगृहात्मकं चक्रमुपदेष्टुं पञ्चमीमृचमाह—तिस्रश्चेति।

तन्त्रान्तरे कर्णिकावृत्तद्वयातिरिक्तानि पद्मद्वयाद् बहिस्त्रीणि वृत्तानि विहितानि दृश्यन्ते। तत्पक्षे तिस्रश्च रेखा इत्येतावन्मात्रं वृत्तरेखात्रयपरं नेयम्। न चैवं

सति कर्णिकाद्वयस्यैवावशेषेण मण्डलत्रयकथनासङ्गतिरिति वाच्यम्। तन्त्रराजे मन्वस्राद् बहिर्मर्यादावृत्तस्याष्टदलकर्णिकावृत्तातिरिक्तस्य कथनेनास्याः श्रुतेस्तन्मूलत्वोपपत्तेः। भूमेः सदनानि तिस्रो रेखा इति सामानाधिकरण्यं त्वक्लिष्टोऽर्थः। ता एव त्रिविष्टपा भुवनत्रयरूपाः, देवतावासभूमित्वात् स्वर्गरूपा वा। त्रिगुणा गुणत्रयरूपाः। त्रिप्रकाशाः सूर्यचन्द्राग्निरूपवृत्तत्रयप्रकाशरूपाः। श्रीचक्रवर्णनमुपसंहरति—एतदिति। सार्द्धचतुष्टयेन वर्णितं पुरं श्रीपुरमिव सपरिवारपरदेवतानिवासस्थानं चक्रं पूरकाणां भक्तमनोरथपूरकाणां शिवविष्ण्वादीनामपि पूरकं मनोरथपूरकम्। अत्र श्रीचक्रे मदनः शिवः कामेश्वरः मदन्या शिवकामसुन्दरी च प्रथेते स्वमयूखात्मकाणिमादिनानादिव्यरूपविस्तारेण विलसत इत्यर्थः। 'छन्दसि परेऽपि व्यवहिताश्च' इत्यभ्यनुज्ञानम्॥५॥

## भाषाव्याख्या

इस तरह तीन ग्रन्थियों (वृत्त) के रूप में तीन मण्डलों का प्रतिपादन हुआ। अब तीन भूरेखाओं (भूगृह, भूपुर) के प्रतिपादन के लिए पाँचवी ऋक् प्रस्तुत है—**तिस्रश्च रेखाः सदनानि भूमेः**। नवम भूगृहात्मक चक्र के उपदेश के लिए यह ऋक् है, ऐसा श्रीभास्करायजी भी सुव्यक्त करते हैं। सर्वप्रकृतिभूता भूमि (पृथिवी) की तीन लोकों के रूप में, तीन गुणों और तीन प्रकारों या प्रकाशों के रूप में तीन मण्डलों के ऊपर चार द्वारों में विद्यमान, सोपानयुक्त तीन रेखायें सदन (गृह) हैं। यह सार्ध चार मन्त्रों से उपदिष्ट श्रीचक्र श्रीपुर के समान पुर (नगर) है जो जीवों के मनोरथों के पूरक (पूर्ण करने वाले) ब्रह्म-विष्णुरुद्रात्मक तीनों देवों के मनोरथों का भी पूरक है। इस श्रीचक्र में मदन (कामेश्वर) और मदन्या (कामेश्वरी) शोभायमान हैं, यह पिण्डित अर्थ है। अन्य पक्ष के प्रतिपादन में व्यवस्था का उपक्रम करते हैं—**तन्त्रान्तरे**।

कतिपय तन्त्रों में दो कर्णिकावृत्तों के अतिरिक्त तीन वृत्त विहित हैं जो दोनों पद्मों (कमल) के बाहर हैं। इस पक्ष में 'तिस्रश्च रेखाः' इन दोनों पदों को वृत्तात्मक तीन रेखाओं के बोधन में ही स्वीकार करना चाहिये। इस तरह यह आशङ्का नहीं करनी चाहिये कि दो कर्णिकाओं के ही अवशिष्ट होने पर पूर्व मन्त्र में तीन मण्डलों का प्रतिपादन असङ्गत हो जायेगा। क्यों? इसीलिए कि तन्त्रराज में चतुर्दशकोण के बाहर अष्टदल कर्णिकावृत्त के अतिरिक्त मर्यादावृत्त का कथन है। एवञ्च, यह श्रुति उसका मूल हो जायेगी। श्रीभास्करराय ने 'त्रिप्रकाराः' के स्थान में 'त्रिप्रकाशाः' पाठ माना है तथा तीनों प्रकाशों में सूर्य, चन्द्र और अग्नि के रूप में तीन वृत्तों को स्वीकार किया है। 'त्रिप्रकाराः' पाठ में अग्नि-वायु-सूर्य, ऋग्-यजुः-साम, गार्हपत्य-आहवनीय-दक्षिणाग्नि, वसु-रुद्र-आदित्य, अकार-उकार-मकार और ब्रह्मा-विष्णु-रुद्र, इन सभी का तीन भूरेखाओं के रूप में प्रतिपादन श्रीरामानन्दतीर्थजी ने किया है॥५॥

# श्रीत्रिपुरोपनिषद्

**मदन्तिका मानिनी मङ्गला च सुभगा च सा सुन्दरी सिद्धिमत्ता ।**
**लज्जा मतिस्तुष्टिरिष्टा च पुष्टा लक्ष्मीरुमा ललिता लालपन्ती ।।६।।**

**श्रीरामानन्दतीर्थकृतभाष्यम्—**

कामेश्वराविनाभूता सा किं नामधेयेत्याकाङ्क्षायाम्—'कथं नु भगवन्! ब्रह्मविद्यानामाख्या ब्रह्मण्यायातेति श्रुत्युक्तरीत्या श्रीविद्यायाः स्वतो नामाद्यभावेऽपि 'नामरूपे व्याकरवाणि', 'नामरूपे व्याकरोत्', 'सोऽहमस्मीत्यग्रे व्याहरत् ततोऽहंनामाऽभवत्', 'नामानि कृत्वाऽभिवदन् यदास्ते'त्यादिश्रुतिभिः कल्पितानि नामानि श्रौतानि कथयति 'मन्दन्तिके'त्यादिना—

**मदन्तिका**—मदयन्ती। स्वार्थे कः प्रत्ययः। वर्णलोपश्छान्दसः। उपासकान् भोगैकरसिकान् साऽऽलोक्य जगताम् अभिमतार्थप्रदानाद् मदयतीति भावः। 'अहं जनाय समदं कृणोमि' इति श्रुतेः। तथा ब्रह्माण्डपुराणे—

**'इन्द्रनीलमयः सालः चक्रवाल इवापरः ।**
**तन्मध्ये कक्षभूमिश्च नीलरत्नमयी मुने ।।**

**तत्र नद्यश्च मधुराः सरांसि शिशिराणि च ।**
**नानाविधानि भोग्यानि वस्तूनि सरसान्यपि ।।**

**ये भूलोकगता मर्त्या ललिताचक्रसाधकाः ।**
**ते देहान्ते शक्रनीलकक्षां प्राप्य वसन्ति ते ।।**

**तत्र दिव्यानि वस्तूनि भुञ्जाना वनितासखाः ।**
**पिबन्तो मधुरं मद्यं नृत्यन्ते तत्र निर्भराः ।।**

**सरस्तटेषु सिन्धूनां कूलेषु कलशोद्भव ।**
**लतागृहेषु ( चित्रेषु ) मण्डपेषु मदर्धिषु ।।**

**सदा जपन्तः श्रीदेवीं पठन्तश्चापि तद्गुणान् ।**
**निवसन्ति महाभागा नारीभिः परिवेष्टिताः ।।'** इति।

**मानिनी**—अन्याधिककरणपूर्वकात्मोत्कर्षो 'मानम्' तद्वती। तद्यथोक्तम्—

**'अन्याधिककरणादात्मोत्कर्षो मानं बलादिजः'**। इति।

**श्रुतिरप्याह—**

**'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः।**
**यं कामयेत तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' ।।**

श्रीभगवत्पादाश्च—**'पुरस्तादास्ते नः पुरमथितुराहो पुरुषिका'**। इति।

**मङ्गला च**—मङ्ग्यते प्राप्यते पुण्यैरिति मङ्गलम्, 'मङ्गेरलच्' इति 'अलच्' प्रत्ययः। तद्रूपा। यद्वा प्रशस्ताचरणरूपा। तथा च स्मृतिः—

**'प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ।**
**एतत्तु मङ्गलं प्रोक्तमृषिभिस्तत्वदर्शिभिः ।।'** इति।

पुराणेषु च—

**'सर्वमङ्गलमाङ्गल्ये शिवे! सर्वार्थसाधिके ।**
**शरण्ये त्र्यम्बके गौरि नारायणि! नमोऽस्तु ते ।।'** इति।

चकारोऽप्यर्थः। सेत्युत्तरत्र स्थितोऽध्याहार्यः। सा पूर्वोक्ता मदना मङ्गला च भवतीति भावः।

**सुभगा**—चापि सा पूर्वोक्ता कामेश्वरी सुभगाऽपि भवति। शोभना भगा ऐश्वर्यादयोऽस्याः सन्तीति सुभगा। तथाचोक्तं विष्णुपुराणे—

**'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।**
**ज्ञानवैराग्ययोश्चैव षण्णां'भग इतीरणात् ।।'** इति।

**'सरस्वती वा सुभगा'** इति श्रुतेः ।

**सुन्दरी**—अभिरूपदेहं वहतीति वा, समस्तसौभाग्यस्वरूपत्वाद् वा। 'सुन्दरीं सुभगा'मिति श्रुतेः। तथा चोक्तं ब्रह्माण्डपुराणे—

**'बालार्कपाटलाकारा नवयौवनदर्पिता ।**
**आमृष्टपद्मरागाभचरणाब्जनखच्छटा ।।**
**यावकश्रीनिर्व्यपेक्षपादलौहित्यवाहिनी ।**
**कलनिःस्वनमञ्जीररवकङ्कणमनोहरा ।।**
**अनङ्गवीरतूणीरदर्पोन्मादनजङ्घिका ।**
**करिशुण्डाकदलिकाकान्तितुल्योरुशोभिनी ।**
**अरुणेन दुकूलेन सुस्पर्शेन तनीयसा ।।**
**अलङ्कृतनितम्बाढ्या जघनाभोगभासुरा ।**
**अर्धोरुकग्रन्थिमती रक्ता काञ्ची-विराजिता ।।**
**नतनाभिगुहावर्तत्रिवल्यूर्मिप्रभावरी ।**
**स्तनकुड्मलहिन्दोलमुक्तादामशतावृता ।।**

अतिपीवरवक्षोजभारभङ्गुरमध्यभूः ।
शिरीषदामकौमल्यशालिनश्चतुरो भुजान् ।।

केयूरकङ्कणश्रेणिमण्डितान् सोर्मिकाङ्गुलीन् ।।

वहन्ती परिसम्मृष्टशङ्खसुन्दरकन्धरा ।
मुखदर्पणवृत्ताभचिबुका पाटलाधरा ।।

शुचिभिः पङ्क्तिशुद्धैश्च विद्यारूपैश्च भास्वरैः ।
कुन्दकुड्मलसच्छायैर्दन्तैर्दर्शितचन्द्रिका ।।

स्थूलमौक्तिकसन्नद्धनासाभरणभासुरा ।
केतकान्तर्दलद्रोणीदीर्घदीर्घविलोचना ।।

अर्द्धेन्दुलुलिता फाले सम्यक् क्लृप्तालकच्छटा ।
बालीवसंसमागिक्यकुण्डलामण्डितश्रुतिः ।।

नवकर्पूरकस्तूरी सदामोदितवीटिका ।
शरच्चारुनिशानाथमण्डलीमधुरानना ।।

चिन्तामणीनां सारेण क्लृप्तचारुकिरीटिका ।।

स्फुरत्तिलकरत्नाभफालनेत्रविराजिता ।
घनान्धकारनिबिडश्यामकुन्तलसंहतिः ।।

सीमन्तरेखाविन्यस्तसिन्दूरश्रेणिभासुरा ।
स्फुरच्चन्द्रकलोत्तंसा मदालोलविलोचना ।।

सर्वशृङ्गारवेषाढ्या सर्वाभरणमण्डिता ।
समस्तलोकमाता च सदानन्दविवर्धिनी ।।

अपाङ्गरिङ्खत्करुणानिर्झरीतर्पिताऽखिला ।
भासते सा भगवती भवघ्नी ललिताऽम्बिका ।।' इति।

**सिद्धिमत्ता**—सिद्धयः अणिमाद्याः, ताभिः मत्ता दृप्ता। अणिमादिसिद्धिभिरजस्त्रं सेवितेत्यर्थः।

'अणिमादिभिरावृतां मयूखैरहमित्येव विभावये भवानीम्' ।

इति मन्त्रशास्त्रोक्तत्वात्। श्रीभगवत्पादैरुक्तम्—

स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितो
निषेव्ये नित्ये त्वामहमिति सदा भावयति यः' ।। इति।

**लज्जा**—उपासकानां स्तोत्रैः कामेश्वरेऽनुरागाद् वा चेतःसङ्कोचनं लज्जा। तद्वतीत्यर्थः। यथोक्तम्—

'चेतःसङ्कोचनं लज्जा व्रीडाऽनङ्ग (राग) स्तवादिभिः'।

इति। ह्रीङ्कारात्मिकेति यावत्।

**मतिः**—तत्त्वानुसन्धानेनार्थनिर्द्धारणं मतिः। बुद्धिस्वरूपेत्यर्थः। तथा चोक्तम्—

**'तत्त्वमार्गानुसन्धानादर्थनिर्धारणं मतिः'**। इति।

**तुष्टिः**—परमानन्दैकभूतत्वात् तुष्टिः। 'आनन्दो ब्रह्म' 'ब्रह्मैषा एकानेक-प्रपञ्चः स्यादि'ति श्रुतेः।

**इष्टा**—परमानन्दत्वेन प्रिया यदा महायागक्रमाराध्या। तद् यथा—

**'कुण्डं योजनविस्तारं सम्यक् कृत्वा तु शोभनम्।
महायागविधानेन प्रणिधाय हुताशनम्॥**

**यजाम परमां शक्तिं मद्यमांसैर्वयं सुराः।
ब्रह्मभूता भवामो वा भोक्ष्यामो वा त्रिविष्टपम्॥**

**एवमुक्तास्तु ते सर्वे देवाः सेन्द्रपुरोगमाः।
विधिवज्जुहुवुर्मांसमुत्कृत्योत्कृत्य मन्त्रतः।
हुतेषु सर्वांशेषु पादेषु च करेषु च॥**

**होतुमिच्छत्सु देवेषु कलेवरमशेषतः।
प्रादुर्बभूव परमं तेजःपुञ्जमनूपमम्॥**

**कोटिसूर्य-प्रतीकाशं चन्द्रकोटिसुशीतलम्।
तन्मध्ये समुदभूच्चक्राकारमनुत्तमम्॥**

**तन्मध्ये च महादेवीमुदयार्कसमप्रभाम्।
जगदुज्जीवनाकारां ब्रह्मविष्णुशिवात्मिकाम्॥'** इति।

**'अहं राष्ट्री सङ्गमनी वसूनां चिकितुषां प्रथमा यज्ञियानाम्'** इति श्रुतिश्च।

**पुष्टा**—सर्वसम्पूर्णा। तथा च श्रुतिः—'नित्यपुष्टां करीषिणीम्' इति। ललितोपाख्याने च सर्वसम्पूर्णता विशेषेण वर्णिता।

**लक्ष्मीः**—लक्ष्यते 'तत्त्वमस्या'दिमहावाक्यैरिति लक्ष्मीः। 'लक्षेर्मुडिति इत्रत्ययो मुडागमश्च। 'भद्रैषा लक्ष्मीर्निहिताधिवाचि', 'श्रियं लक्ष्मीमौपलामम्बिकाङ्गामि'त्यादि श्रुतिभ्यः। आगमश्च 'महालक्ष्म्याः पुरं चक्रं तत्रैवाऽऽस्ते तथा शिवः' इति।

**उमा**—प्रणवस्वरूपिणी ब्रह्मविद्या, ओङ्कार-ब्रह्मविद्याया एव उमेति संज्ञेत्यर्थः। ओङ्कार एव वर्णव्यत्ययेनोमेति गम्यते। तथैवोक्तं कैवल्योपनिषदादिषु—**'उमासहायं परमेश्वरं प्रभुम्', 'स तस्मिन्नेवाऽऽकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम्' 'अम्बिकापतय उमापतये नमो नम'** इति। एतदर्थस्तु सूतसंहितायाम्—

**'उमासहायमोमर्थं प्रभुं साक्षात् त्रिलोचनम्'।** इत्यादिना

**'भक्तानामार्तिहन्त्री तु तत्रैवाऽन्तर्हिताऽभवत् ।।'** इत्यन्तेन भागेन स्पष्टीकृतः।

अत्राभियुक्तोक्तिरपि—

**'ओमित्युमेति युवयोरभिधानमेकं**
**सृष्ट्यादिसृष्ट्यवधितागुणमात्रभिन्नम् ।**
**एकं च तावदभिधेयमपीहरूपं**
**वेणी-जटेति कचसंहतिभेदभिन्नम् ।।'** इति।

**ललिता**—**'सुकुमाराङ्गविन्यासा ललिता परिकीर्तिता।'** इति।

यद्वा—धीरललितगुणवती ।

**'निर्जिताशेषशत्रुत्वान्निश्चिन्ता नीतिविप्लवा ।**
**सचिवन्यस्तभूभारा सुधीरललिता स्मृता ।।'** इत्युक्तम्।

तथैवोक्तं सहस्रनामस्तोत्रे—

**'महापाशुपतास्त्राग्निनिर्दग्धाऽसुरसैनिका ।**
**कामेश्वराऽस्त्रनिर्दग्धसभण्डासुरशून्यका ।।'** इति।

'मन्त्रिणीन्यस्तराज्यधूरि'ति च ।

अतः धीरललितगुणवत्त्वात् ललितेति ।

अथवा—'कामेश्वराङ्कोपलालनाल्ललिता'। तथा च ललितोपाख्याने—

**'कामेश्वराङ्कपर्यङ्कलालनाल्ललिताभिधे'ति ।**

**लालपन्ती**—अजस्रं निरवधिकपरकामेश्वरगुणान् आम्रेडयन्तीत्यर्थः। यथोक्तं श्रीभगवत्पादैः—

**'अविश्रान्तं पत्युर्गुणगणकथाऽऽम्रेडनजपा-**
**जपापुष्पच्छाया तव जननि! जिह्वा जयति से'ति ।।६।।**

**श्रीभास्कररायप्रणीतभाष्यम्—**

क्षेत्रेषु विविधेषु नामभेदेन यानि देवीरूपाणि पुराणेषु तन्त्रेषु चोपलभ्यन्ते

तानि सर्वाण्यस्या एवेत्युपदेष्टुं षष्ठीमृचमाह—मदन्तिकेति।

पद्मपुराणे देवीतीर्थपरिगणनावसरे कतिपयानि रूपाण्युक्तानि—'प्रयागे ललिता देवी' इत्यादिना। लङ्कायां मङ्गला नाम त्रिकूटे भद्रसुन्दरी। करवीरे महालक्ष्मीस्तथा देवीविनायके।। देवदारुवने पुष्टिर्मेधा काश्मीरमण्डले। तुष्टिर्वत्सेश्वरे तथा' इत्यादीनि अन्यान्यपि रूपाणि तत्र तत्रान्वेष्याणि। मदन्तिकेत्यादिचतुर्दशकं वाराणस्यां विशालाक्षीत्यादीनामुपलक्षणम्। यदेव किञ्चिद्देवीरूपं तत्त्वेन लालप्यमानापि सैवेत्यर्थः। लालपन्तीपदं लालप्यमानापरम्। 'प्रातिपदिकादुच्चरन्ती विभक्तिः प्रातिपदिकार्थौ विशेषक इत्याह' इति शाबरभाष्ये प्रयोगदर्शनात्। अथवा पञ्चदशाक्षराणां पञ्चदशेया देवताः। शुद्धमत्तेत्यत्र सिद्धिमत्तेत्याथर्वणः पठिः ।।६।।

## भाषाव्याख्या

भिन्न-भिन्न क्षेत्रों में नाम के भेद से जो देवी के रूप पुराण तन्त्र आदि ग्रन्थों में मिलते हैं वे सभी रूप श्रीचक्राधिष्ठात्री के ही हैं, इस तथ्य के उपदेश के लिए ही यह छठी ऋक् है—**मदन्तिका मानिनी**। यहाँ देवी के नामों की चर्चा है। देवीतीर्थों की परिगणना पद्मपुराण में है जहाँ उनके रूपों का भी वर्णन है। आचार्य इसको इङ्गित करते हैं—**पद्मपुराणे**।

प्रयाग में ललिता देवी, लङ्का में मङ्गला, त्रिकूट में भद्रसुन्दरी, करवीर में महालक्ष्मी तथा विनायक में देवी, देवदारुवन में पुष्टि, काश्मीर में मेधा, वत्सेश्वर में तुष्टि। इसी तरह पुराण आदि शास्त्रों का गवेषण करने पर विभिन्न रूपों का दर्शन होता है। मन्त्र में मदन्तिका से लेकर ललिता तक चौदह नाम परिगणित हैं जिनसे वाराणसी में विशालाक्षी आदि देवियाँ भी उपलक्षित हैं। लालपन्ती का लालप्यमाना अर्थ है। इस तरह का प्रयोग आचार्यों के ग्रन्थों में हुआ है, ऐसा इङ्गित करते हैं—**'प्रातिपदिकादुच्चरन्ती विभक्तिः प्रातिपदिकार्थौ विशेषक इत्याह' इति शाबरभाष्ये प्रयोगदर्शनात्।**' यहाँ 'उच्चरन्ती' का 'उच्चार्यमाणा' अर्थ है। तात्पर्य प्रकट करते हैं—**यदेव किञ्चिद्**। जो कुछ भी देवी का रूप लोक में तत्त्वतः उच्चारित होता है उसमें वही परदेवता प्रतिष्ठित है। पक्षान्तर प्रस्तुत करते हैं—**अथवा**। मन्त्र के पन्द्रह अक्षरों से पन्द्रह देवताओं का उपदेश यहाँ समझना चाहिये। इस तरह 'लालपन्ती' पद भी मदन्तिका आदि की तरह देवी के रूप में परिगणित हो जायेगा। श्रीरामानन्दाचार्यजी ने पन्द्रहवें रूप को स्वीकार किया है। इन्होंने सभी नामों का निवर्चन भी किया है। तथाहि-

**मदयतीति मदन्तिका**। भोगरसिकों को जो अभीष्ट वस्तु प्रदान करके मतवाला बनाये। **'अहं जनाय समदं कृणोमि'**, इस मन्त्र से भी **'मदन्तिका'** नाम की पुष्टि होती है। **मानिनी मानमस्ति अस्याः सा**। बलादि से जायमान आत्मोत्कर्ष ही मान है। **मङ्गला**

**मङ्ग्यते प्राप्यते पुण्यैर्या सा।** पुण्य से जिनको प्राप्त किया जा सके वे मङ्गला गौरी हैं। पूर्व मन्त्र में निर्दिष्ट मदना ही मङ्गला हैं। **शोभना भगा यस्याः सा सुभगा।** श्री विष्णुपुराण में षड्विधैश्वर्य को भग के रूप में इस तरह कहा गया है—

**'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।**
**ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणात् ।।'**

**अभिरूपं देहं वहति या सा सुन्दरी।** समस्त सौभाग्यों से सम्पन्न होने के कारण भी 'सुन्दरी' नाम है। **अणिमादिभिः सिद्धिभिर्मत्ता या सा सिद्धिमत्ता।** अणिमा आदि सिद्धियाँ जिनकी नित्य सपर्या करें वे सिद्धिमत्ता हैं। उपासकों के स्तोत्रों या कामेश्वर सदाशिव में अनुराग होने से लज्जावती ही लज्जा हैं। जो नारियों में जायमान साक्षात् लज्जारूपिणी हैं। ह्रीङ्काररूपा हैं। मति अर्थात् बुद्धिस्वरूपिणी हैं। तत्त्वमार्ग के अनुसन्धान से अर्थ के निर्धारण को मति कहते हैं—

**'तत्त्वमार्गानुसन्धानादर्थनिर्धारणं मतिः ।'**

परमानन्दस्वरूप होने से तुष्टि हैं। परमानन्द रूप होने के कारण सभी साधकों को या जीवमात्र को अभीष्ट होने से 'इष्टा' हैं। महायाग से आराधित होने के कारण भी 'इष्टा' कही जाती हैं। **सर्वप्रकारेण सम्पूर्णा पुष्टा।** सर्वतः सम्पूर्ण हैं। श्रीसूक्त में भी आया है— **'नित्यपुष्टां करीषिणीम्'।** ब्रह्मादि स्तम्ब पर्यन्त यावत् पदार्थों का उपचय-अपचय होता है किन्तु श्रीभगवती का विग्रह नित्य एक रूप रहा है, यह अभिप्राय 'पुष्टा' का है। **तत्त्वमस्यादिमहावाक्यैर्या लक्ष्यते सा लक्ष्मीः।** अर्थात् ब्रह्मज्ञानी 'तत्त्वमसि' आदि महावाक्यों से जिनका निरूपण करें वे लक्ष्मी हैं। अन्यत्र श्रुतियों में भी श्रीभगवती का यह नाम सुप्रथित है—**'भद्रैषा लक्ष्मीर्निहिताऽधिवाचि', 'श्रियं लक्ष्मीमौपलामम्बिकाङ्गाम्'।** आगम का भी कथन है—**'महालक्ष्म्याः पुरं चक्रं तत्रैवास्ते तथा शिवः।'** शिव का यहाँ 'नारायण' अर्थ है। अथवा **यया लक्ष्यते जनैः सा लक्ष्मीः सौन्दर्यम्।** जिसके कारण किसी वस्तु को लोग साभिलाष देखें वह सौन्दर्य ही लक्ष्मी कहा जाता है। श्रीभगवती रमणीय वस्तु में रमणीयता का हेतु साक्षात् सौन्दर्य हैं। **श्रीयतेऽनयेति श्रीः सम्पत्।** जिसके कारण लोग किसी की सेवा-चापलूसी करें वह सम्पत्ति ही श्री है। इन्हीं दो यौगिक अर्थों को लेकर ही श्री और लक्ष्मी अर्थात् सम्पत्ति और सौन्दर्य को श्रीनारायण के भार्यास्थानीय के रूप में यह मन्त्रवर्ण कथन करता है—**'श्रीश्च ते लक्ष्मीश्च पत्न्यौ।'**

ऐसे में श्री और लक्ष्मी में विभेद करके दोनों को अलग-अलग भगवान् की पत्नी के रूप में सिद्ध करने का रामानन्दियों का प्रयास उनकी अपार शठता को प्रकट करता है।

उमा = प्रणवरूपा ब्रह्मविद्या। ओङ्कार और ब्रह्मविद्या का ही उमा नाम है। कैवल्योपनिषत् में आया है—**उमासहायं परमेश्वरं प्रभुम्।**

इसका अर्थ सूतसंहिता में है—

**'उमासहायमोमर्थं प्रभुं साक्षात् त्रिलोचनम्'।** अर्थात् त्रिलोचन भगवान् शिव सदा उमा से सम्पृक्त रहते हैं।

ललिता अर्थात् सुकुमाराङ्गविन्यासवती या धीर-ललित गुणों से युक्त। कामेश्वर के अङ्क में उपलालित (विलसित) होने से भी 'ललिता' नाम है। जैसा कि ललितोपाख्यान में आया है—

**'कामेश्वराङ्कपर्यङ्कलालनाल्ललिताभिधा।'**

निरन्तर और निरवधिक रूप से अपने पति कामेश्वर के गुणों का आवर्तन करने के कारण लालपन्ती नाम है।।६।।

## श्रीत्रिपुरोपनिषद्

**इमां विज्ञाय सुधया मदन्तीं परिस्त्रुता तर्पयन्तः स्वपीठम्।**
**नाकस्य पृष्ठे महतो वसन्ति परं धाम त्रैपुरं चाविशन्ति।।७।।**

**श्रीरामानन्दतीर्थकृतभाष्यम्—**

ज्ञातॄणां फलं कथयति—'इमां विज्ञाये' त्यादिना।

**'इमां'** पूर्वोक्तां कामेश्वराङ्कवासिनीं देवीम्, 'विज्ञाय' सम्यग् ज्ञात्वा। कीदृशीमित्याह—सुधया मदन्तीम्। 'सुधया' अमृतलक्षणेन द्रवद्रव्येण, मदन्तीं मत्ताम्। यथोक्तं सहस्रनामस्तोत्रे—'माध्वीपानालसा मत्ते'ति। 'परिस्त्रुता' अभिष्टुता, सोमलक्षणेनाऽमृतेन। तथा च श्रुतिः—'पुनाति ते परिस्रुतं सोमसूर्यस्य दुहिते'ति। तर्पयन्तः प्रीणयन्तः। किं प्रीणयन्तः? स्वपीठं स्वशरीरम्। नाकस्य स्वर्गस्य श्रीपुरमध्यगतमुक्ताप्राकारपूर्वदिग्भागस्थितस्य, महेन्द्रलोकस्थितस्य। पृष्ठे उपरिभागे। कीदृशस्य? महतो विस्तारवतः। वसन्ति तिष्ठन्ति। देवानां सोमवदम्बाया वारुण्यतीव प्रियेति ब्रह्माण्डोत्तरपुराणे ललितोपाख्याने प्रोक्तम्। यथा—

**'सर्वदेवप्रिये देवि! वाजपेयादिकैर्मखैः।**
**सोमपानवदन्यं तं पातुमर्हसि वारुणीम्।।**

**यागेन मन्त्रपूतेन पीतेन भवता जनः।**
**सिद्धिं बुद्धिं बलं स्वर्गमपवर्गं च गच्छती'ति।।**

अन्ते सायुज्यं च गच्छतीत्याह—**'परं धामे'** त्यादिना। परं सर्वोत्कृष्टं धाम तेजः। परं ब्रह्मेत्यर्थः। तथा च श्रीभगवद्गीतायाम्—

**'परं ब्रह्म परं धाम पवित्रं परमं भवान्'** इति।

कीदृशं धामेत्यत आह—**'त्रैपुरम्'** इति। त्रिपुराशब्दो व्याख्यातः। तत्सम्बद्धं

तेजः। अथवा—'अथ यदतः परोदिवो ज्योतिः दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु तावद् यदिदमस्मिन् पुरुषे ज्योतिः' इत्युक्तं तेजः, प्रत्यगभिन्नं ज्योतिरित्यर्थः। आविशन्ति प्रविशन्ति ब्रह्मैव भवन्तीत्यर्थः।।७।।

**श्रीभास्करारायप्रणीतभाष्यम्—**

एवं वर्णिताया देवताया उपास्तिं विधातुं सप्तमीमृचमाह—**इमामिति।**

इमां पूर्वोक्तां परदेवतां विज्ञाय विधिविशेषपूर्वकं ज्ञात्वा गुरूपसदन-दीक्षादिपूर्वकमुपास्तिं स्वीकृत्य स्वपीठं स्वशरीराभिन्नं श्रीचक्रं तत्र देवतां सावरणां सुधया परिस्रुता पीयूषीकृतेन द्रव्येण तर्पयन्तः तर्पणाद्युपचारैः पूजयन्तो ये मदन्ति विषयभानप्रमोषपूर्वकं स्वात्मैकविषयकनिर्विकल्पविषयभाजो भवन्ति ते महतो नाकस्य पृष्ठे वसन्ति त्रैपुरं परं धाम चाविशन्ति चेत्यर्थः। अमृतीकरणं संस्कारान्तराणामुपलक्षणम्। तदभिमानिदेवतायां सुधादेवीति संविच्च संस्कारमन्त्र-वर्णादवगम्यते।

**'मन्त्रसंस्कारसंशुद्धं तदेवामृतमुच्यते'**

इति रुद्रयामलश्च। महानाकपृष्ठवासस्त्रिविधपुरुषार्थफलोपलक्षकः। त्रिपुरायाः परं धाम तु मुक्तोपसर्तव्यं स्वरूपम्, न मोक्ष उच्यते। सर्वान् कामान्मोक्षश्चाप्नुवन्तीति भावः।

**'एवं सर्वगता शक्तिः सा ब्रह्मेति विविच्यते।**
**सगुणा निर्गुणा चेति द्विविधोक्ता मनीषिभिः।।**
**सगुणा रागिभिः पूज्या निर्गुणा तु विरागिभिः।**
**धर्मार्थकाममोक्षाणां स्वामिनी सा निराकुला।।**
**ददाति वाञ्छितानर्थानर्चिता विधिपूर्वकम्।।'**

इति देवीभागवते स्मरणात्।

श्रीविद्यादीक्षितो द्रव्यवता स्वपीठार्चनेन निर्विकल्पकवृत्तिद्वारा सर्वान् कामान् भावयेत् इति [१]भावनाविशिष्टभावनान्तरविधिः पर्यवस्यति। **सर्वथा 'मतिमान्दीक्षेत' इत्यादिकल्पसूत्रादिगतविशेषणविधीनामियमेव श्रुतिर्मूलम्।** 'विज्ञाय तर्पयन्तः'

---

१. रेवत्यधिकरणसिद्धान्तोऽत्र बोधितः श्री भास्कररायैः। तत्र हि—'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोम साम कृत्वा ब्रह्मवर्चसकामो यजेत' इति वाक्ये प्रकृताग्निष्टुद्या-गानुवादेनैतद्वाक्योपात्तगुणानां विधाने वाक्यभेदापत्तेः क्त्वाप्रत्ययोपात्तभावनोप-सर्जनकं भावनान्तरं विधीयत इति सिद्धान्तितम्। सोऽयं सिद्धान्तः स्मारितः श्रीभास्कराचार्यैः।

इत्यधिकारिविशेषणतया श्रुतमपि तर्पणं फलभावनाकरणत्वेन सम्बध्यते 'हिरण्यदा अमृतत्वं भजन्ते' इतिवत्। अप्राप्तार्थकत्वाद्विधिशक्तिप्रतिबन्धाभावाच्च मन्त्रत्वेऽपि न विधिव्याघातः। 'वसन्ताय कपिञ्जलानालभते' 'प्रणीयादिन्नाथमानाय तव्यान्' 'आस्य जानन्तो नाम चिद्विविक्तन' इत्यादिमन्त्राणामपि बहुशो विधित्वस्वीकारात् वस्तुतो मदन्तीत्यस्य [1]यदाग्नेयवाक्य इव लेट्त्वकल्पनया भावार्थाधिकरणन्यायेन चिद्देव्यभिन्नात्ममात्रविषयकवृत्तिविशेषबोधकमदधात्वर्थस्यैव करणत्वम्। अन्तर्यागपदवाच्यतापि तस्यैव, यजतेर्वृत्तिविशेषवाचकत्वात्। परिस्रुतेति तु मत्वर्थलक्षणया धात्वर्थेनान्वेति। भावनान्वितयोरुभयोररुणैकहायनीन्यायेन वा पार्ष्ठिकोऽन्वयः। 'प्रतितिष्ठन्ती'[2]त्यस्येव नाकस्य पृष्ठे इत्यादेर्भाव्यसमर्पकत्वत्वम्। चकारेण फलसमुच्चयकथनात्। **'पूत एव तेजस्वी अन्नाद इन्द्रियावी पशुमान् भवति'** इत्यत्रेव सम्बन्धिसंवलिताधि-कारत्वम्। अनेकेषां पुरुषार्थानां व्यासज्यवृत्तिफलत्वमिति यावत्। न पुनः 'सर्वेभ्यः कामेभ्यः' इतिवत्प्रत्येक-पर्याप्तम्। तर्पणन्तु [3]फलवदफलन्यायेनाङ्गम्। 'इमां विज्ञाय' इति विद्वत्ताधि-

---

१. 'यदाग्नोयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याच्चाच्युतो भवति' इति वाक्य माग्नेययाग-विधायकम्। अत्र 'भवति' पदं लट्लकारे वर्तते। तस्य न विधायकत्वम्। एवं सति कथमिदं वाक्यमाग्नेययागविधायकमित्युच्यत इत्याशङ्क्य लेट्लकारकल्पनयास्य वाक्यस्य विधायकत्वमाग्नेयाधिकरणे व्यवस्थापितम्। अनेन न्यायेन 'मदन्ति' इत्यस्यापि लेट्त्वकल्पनेत्यर्थः। लेट्स्थाने स्थितस्याख्यातस्य भावना अर्थः। अप्राप्तप्रापकस्थलेषु भावनायां धात्वर्थस्य करणत्वेनान्वय इति भावार्थाधिकरणसिद्धो न्यायः। भावनायां वाक्योपात्तपदार्थानां विशेष्यविशेषणभावमुत्सृत्य साक्षादन्वय एकः, तदनन्तरं पार्ष्ठिकान्वयो द्वितीय इति मीमांसकमर्यादा। यत्र धात्वर्थेन सहानेकेषां पदार्थानां विधानं तत्र विशिष्टविधिमङ्गीकृत्य मत्वर्थलक्षणाघटितशशाब्दबोधस्वीक्रियते, येन च वाक्यभेददोषान्मुक्तिर्भवति। आग्नेयवाक्ये अग्न्यष्टाकपालपुरोडाशामावास्यापौर्णमासीकालविशिष्टस्य धात्वर्थस्य विधानम्। वाक्योपात्तगुणवता यागेन भावयेत् फलमिति बोधो निष्पद्यते। प्रकृते चिद्देव्यभिन्नात्म-मात्रविषयकवृत्तिविशेषरूपमदधात्वर्थस्य विधानम्। सोऽयं चित्तवृत्तिविशेषो भावनात्मकान्तर्यागेऽपि सम्बध्नाति बहिर्यागेऽपि। भावनात्मककार्येष्वपि भावनात्मकद्रव्यदेवतादीनामा-वश्यकता वर्तत एव। साधकेन बहिर्यागेऽपि पूर्वोक्तचित्तवृत्तिमतैवानुष्ठेयः। अन्तर्यागे तन्मयीभावावाप्तये बहिर्यागस्याप्युपकारकत्वमेष्टव्यमेव। अतः 'परिस्रुता' इत्यादिपदैरवबोध्यमानाः पदार्था अपि विशेषणतया भावनायामन्वियन्तीति सिध्यति। तत्र भावनायास्ते कीदृशमुपकारं कुर्युरिति शङ्कायां साक्षादुपकारत्वासम्भवेऽपि धात्वर्थविशेषणतामापन्ना उपकुर्युरित्यरुणाधिकरण-सिद्धन्यायोऽभिवदति। एवमन्वितस्य धात्वर्थस्य साध्यं किमित्यपेक्षायां रात्रिसत्राधिकरणन्यायेन 'नाकस्य पृष्ठे' इत्यादेर्भाव्यसमर्पकत्वमिति प्रघट्टकार्थः।

२. रात्रिसत्रन्यायेनेत्यर्थः।

३. फलवत्सन्निधावफलं तदङ्गमिति न्यायः।

कारितावच्छेदको धर्मः। अत एव 'कुलदीक्षाविहीनानां नाधिकारो द्विजन्मनाम्' इति समयाचार-स्मृतिरुपपद्यते। इह **'तर्पयन्तः'** इति शतृप्रत्ययेन बहिर्यागविधौ वक्ष्यमाणे (मन्त्रे १२) 'निवेदयन् स्वात्मीकृत्य' इति च शतृल्यप्प्रत्ययाभ्यां देवतानिवेदनस्वात्मीकरणयोः समानकालत्वकथनाद् दिव्यपानविधावेव श्रुतेः स्वारस्यम्, न वीरपानविधौ। तेन,

**'पानन्तु त्रिविधं प्रोक्तं दिव्यवीरपशुक्रमैः।**
**दिव्यं देव्यग्रतः पानं वीरमुद्रासने कृतम्॥'**

इति स्मृतेर्मूलं श्रुत्यन्तरमन्वेष्यम्। **पुरुषार्थनिषेधास्तु रागप्राप्तैकविषयत्वात् क्रत्वर्थत्वेन विहितेषु न प्रवर्तन्त एव।**

**'येन केनाप्युपायेन शिवे चित्तं निवेशयेत्।**
**तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्॥'**

इत्यादिपुराणवचसामीदृशाशय एव स्वारस्यात्। स्पष्टानां तत्र वचसां क्रत्वर्थसर्ववर्णोद्देशेन विधायकानां बहुलमुपलम्भात्। तेषाच्चेदृशानेक-श्रुति-प्रत्यक्षश्रुतिमूलकत्वेन बलाबलचिन्तानवकाशादिति दिक्॥७॥

## भाषाव्याख्या

पूर्वोक्त मन्त्रों से वर्णित परदेवता की उपासना के विधान के लिए सातवी ऋक है— **इमां विज्ञाय सुधया मदन्ति।** पूर्वोक्त परदेवता का विधान विशेषपूर्वक अर्थात् यथावत् ज्ञान प्राप्त करके अपने शरीर से अभिन्न पीठ = श्रीचक्र अर्थात् चक्रस्थ सावरण देवता का अमृतभूत = मन्त्रसंस्कार से संस्कृत द्रव्य के द्वारा जो तर्पण आदि उपचारों से पूजन करते हैं और विषयवेदनत्यागपूर्वक आत्ममात्र का निर्विकल्प ज्ञान से संयुक्त हो जाते हैं (मदन्ति) वे स्वर्ग के ऊपर निवास करते हैं और त्रिपुरासम्बन्धि ज्योति में प्रवेश कर जाते है। परदेवता का ज्ञान यहाँ पर गुरुसमीप जाकर दीक्षादिपूर्वक उपासना का स्वीकार है। केवल ज्ञान को स्वीकार करने पर 'परिस्रुता तर्पयन्तः स्वपीठम्' से उपलक्षित सकल सावरण पूजन असङ्गत होने लगेगा। श्रीरामानन्दतीर्थ ने 'मदन्तीं' पाठ स्वीकार करके देवी का विशेषण माना है- सुधया = **अमृतलक्षणेन द्रवद्रव्येण मदन्तीं ललितां देवीं ज्ञात्वा ये स्वपीठं पूजयन्ति ते स्वर्गपृष्ठे वसन्ति त्रैपुरं प्रत्यगभिन्नं ज्योतिश्च विशन्ति।** अर्थात् संस्कार से परिपूत अमृतीभूत सुरारूप द्रवद्रव्य से मत्त श्रीललिता देवी की जो उपासना करते हैं वे स्वर्ग में निवास करते हैं और ब्रह्मरूपता को प्राप्त करते हैं। 'त्रैपुरधाम' का प्रत्यगभिन्न ज्योति परब्रह्म अर्थ है। तथा च, सायुज्यमुक्ति का निर्देश है। परम ज्योति के विषय में यह श्रुति है—

**'अथ यदतः परोदिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु तावद् यदिदमस्मिन् पुरुषे ज्योतिः।'**

परं ब्रह्म भगवान् ही सर्वोत्कृष्ट धाम हैं, यह उक्त श्रुति का अर्थ है जिसे गीता में भी सुस्पष्ट किया गया है—

**'परं ब्रह्म परं धाम पवित्रं परमं भवान्'।**

सारी कामनाओं की सिद्धि और मोक्ष की प्राप्ति श्रीत्रिपुरोपासना से प्राप्त होती है, इसे श्रीभास्करराय भी स्वीकार करते हैं—**सर्वान् कामान् मोक्षञ्चाप्नुवन्तीति भावः।** परब्रह्म के रूप में भगवती को माना गया है। जैसा कि देवीभागवत के वचनों को आचार्य ने प्रस्तुत किया है—

**'एवं सर्वगता शक्तिः सा ब्रह्मेति विविच्यते।**
**सगुणा निर्गुणा चेति द्विविधोक्ता मनीषिभिः ।।**
**सगुणा रागिभिः प्रोक्ता निर्गुणा तु विरागिभिः।**
**धर्मार्थकाममोक्षाणां स्वामिनी सा निराकुला ।।**
**ददाति वाञ्छितानर्थादर्चिता विधिपूर्वकम् ।।'**

शक्ति और शक्तिमान् में तादात्म्य स्वीकार करने पर देवी को ब्रह्म कहा जाता है। किन्हीं अवसरों पर प्रत्यक्चैतन्य से विशिष्टा शक्ति विवक्षित होती है तो किन्हीं अवसरों पर शक्तिविशिष्ट प्रत्यगात्मरूप चैतन्य की विवक्षा होती है। श्रीभास्करराय ने इसी नीति का अनुसरण करके शक्ति के कार्य जगत् को श्रीललितासहस्रनाम की व्याख्या में सत्य माना है, न कि मायावादियों की तरह मिथ्या।

इसी बात को 'सर्वगता शक्तिः' पदों से द्योतित किया गया है। सगुण और निर्गुण के भेद से शक्ति के दो प्रकार होते हैं, यह कथन भी पूर्वोक्त तथ्य को ही ध्वनित करता है। उपनषिदों में सगुण और निर्गुण भेद ब्रह्म का ही प्रतिपादित है, न तु केवल माया शक्ति का। स्वर्गादि सुखों के लिए सगुणोपासना और कैवल्यार्थ विरागियों के लिए निर्गुण-उपासना का उपदेश है। शास्त्रों में विहित पदार्थों के यथावत् अनुष्ठान से आराधिता भगवती चतुर्वर्ग प्रदान करती है। क्यों? इसीलिए कि वह धर्म-अर्थ-काम-मोक्ष रूप चतुर्वर्ग की स्वामिनी है। देवता में फलदातृत्व है, न कि जडात्मक कर्मों में, यह महर्षिवादरायण का मत देवीपुराण में सुव्यक्त हुआ है। अप्राप्तत्वात् मन्त्रवर्ण में भी विधित्वकल्पना का सिद्धान्त स्फोरित करते हैं— **श्रीविद्यादीक्षितो द्रव्यवता स्वपीठार्चितेन निर्विकल्पकवृत्तिद्वारा सर्वान् कामान् भावयेत्।**

श्रीविद्या की दीक्षा प्राप्त करके परिस्रुत् (द्रवद्रव्य) आदि द्रव्यों वाले श्रीचक्रोपासन से तन्मयता = देवीमयता को प्राप्त होकर स्वर्ग आदि सारे फलों को प्राप्त करें, इस तरह विशिष्टविधि अप्राप्तत्वात् स्वीकृत है। कहा भी गया है—

**तद् गुणाश्च विधीयेरन्नविभागाद् विधानार्थे न चेदन्येन शिष्टाः।**

इसके अभिप्राय को मीमांसा के वार्तिककार कुछ इस तरह से प्रकट करते हैं—

**'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।**
**अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः।।'**

अन्य वचनों से कर्म का विधान न होने पर कर्म और उसके अङ्ग द्रव्य-देवता आदि अनेक का विधान होना चाहिये। अनेकविधान होने पर तो वाक्यभेद (दोष) होने लगेगा? इस आशङ्का का समाधान है— **अविभागाद् विधानार्थे। विशिष्टस्यैकत्वादित्यर्थः।** अनेक गुणों से विशिष्ट कर्म का विधान होने से वाक्यभेद नहीं होगा, क्योंकि विशिष्ट एक ही होता है। सर्वत्र विशिष्टविधि में मत्वर्थलक्षणा होती है, इस बात को आचार्य ने **'द्रव्यवता स्वपीठार्चनेन'** से ध्वनित किया है। विशिष्टविधित्व को स्वयमेव कहते हैं— **भावनाविशिष्टभावनान्तरविधिः पर्यवस्यति।** 'इमां विज्ञाय' में 'क्त्वा' प्रत्यय से गुरुसमीपगमनदीक्षादिपूर्वकोपासनाभावना को भी विधि- विशेषण के रूप में स्वीकार की गया है तथा 'तर्पयन्तः' से अर्चनभावना का विधान है। 'भावना' का अर्थ फलोत्पादन के अनुकूल पूजन- व्यापारविषयक प्रयत्न है। कर्म के यावत् प्रकारों का या यावत् प्रकारों से विशिष्ट कर्म का ज्ञान प्राप्त करके ही दीक्षा ग्रहण करनी चाहिये, इत्यादि बातें जो कल्पसूत्रों में प्रतिपादित हैं उनके मूल में यह प्राकरणिक मन्त्र ही है, इस तथ्य को ध्वनित करते हैं— **सर्वथा 'मतिमान् दीक्षेत' इत्यादि।** प्राय: अधिकारिविशेषण के रूप में श्रुत पदार्थ फल माना जाता है। जैसे 'राजसूयेन यजेत स्वाराज्यकाम:' में राजसूययज्ञ का अधिकारी स्वाराज्य की कामना वाला पुरुष है और उसका विशेषण स्वाराज्यकामना या स्वाराज्य फल है। कामना का विषय स्वाराज्य इच्छाविषयत्वेन स्वाभाविकतया प्राप्त है अत: फलरूप है। जहाँ अधिकारी का विशेषेण अप्राप्त रहता है, वह विधीयमान होकर फलभावना (आर्थीभावना) में करण हो जाता है। इसी स्थिति को यहाँ प्रदर्शित करते हैं—**'विज्ञाय तर्पयन्तः' इत्यधिकारिविशेषणतया श्रुतमपि तर्पणं फलभावनाकरणेत्वेन सम्बध्यते 'हिरण्यदा अमृतत्वं भजन्ते' इतिवत्।** 'हिरण्यदा अमृतत्वं भजन्ते', इस वाक्य से कार्यरूप विध्यर्थ की प्रतीति नहीं हो रही है, क्योंकि कार्यता का प्रतिपादक लिङ् नहीं है। 'भजन्ते', यह सिद्धार्थबोधक लट् है। हिरण्य (स्वर्ण) का दान करने वाले मोक्ष (अमृतत्व) प्राप्त करते हैं। यहाँ 'हिरण्यदा:' अधिकारी का विशेषण है, अत: भावना में करण कैसे हो सकता है? 'भजन्ते' में जब 'लेट्' की कल्पना करके विधित्व स्वीकार करेंगे तो उक्त वाक्य का अर्थ होगा—'सुवर्णदानेन मोक्षं भावयेत्' अर्थात् सुवर्ण का दान करके मोक्ष प्राप्त किया जाय। अधिकारी का विशेषण होकर भी जैसे हिरण्यदान भावना में करण हो गया है वैसे ही यहाँ पर भी 'तर्पयन्त:' से बोधित तर्पण भावना में करण हो जायेगा—**परदेवतातर्पणेन त्रैपुरं धाम भावयेत्।** भगवती की आराधना से त्रिपुरादेवी के लोक को प्राप्त किया जाय। शास्त्र से मन्त्रों का अभिधायकत्व मात्र सिद्ध है, न कि अज्ञातज्ञापनरूप विधान, फिर कैसे विधित्व को स्वीकार कर सकते हैं, इस आशङ्का का समाधान करते हैं—**अप्राप्तार्थकत्वाद् विधिशक्ति-प्रतिबन्धाभावाच्च मन्त्रत्वेऽपि न विधिव्याघातः।** मन्त्र में भी यदि अन्य प्रमाणों से अज्ञात अर्थ विद्यमान है और प्राप्तिद्योतक पदों से विधिशक्ति प्रतिबन्धित नहीं

हो रही है तो विधित्व माना जा सकता है। ऐसी स्थिति में विधित्वस्वीकार में कोई बाधा नहीं है। अयम्भाव:—जिन वाक्यों में प्राप्ति के द्योतक शब्दों का प्रयोग होता है वहाँ विधायकत्वशक्ति प्रतिबन्धित हो जाती है। मन्त्रों के साथ ब्राह्मणवाक्यों में भी ऐसा स्वीकार किया गया है। यत्-तत् शब्दों का प्रयोग होने पर और उत्तमपुरुष एवम् सम्बोधनविभक्ति का प्रयोग होने पर प्राय: विधिशक्ति प्रतिबन्धित होती है। जैसे 'देवाश्च याभिर्यजते ददाति च ज्योगित् ताभि: सचते गोपति: सह', इस मन्त्र में गो की स्तुति है जहाँ प्राप्ति का द्योतक 'याभि:' पद है जिससे अज्ञातज्ञापनरूप विधि प्रतिबन्धित है। 'यस्योभयं हविरार्तिमार्च्छेत्', इस ब्राह्मणवाक्य में भी वैसा ही 'यस्य' शब्द का प्रयोग है। इसी तरह 'अग्नीदग्नीन् विहर' में संबोधनविभक्ति का प्रयोग होने से और 'बर्हिर्देवसदनं दामि' में उत्तमपुरुष का प्रयोग होने से आख्यात को विधायक न मान कर केवल अभिधायक माना गया है। 'यत्' आदि शब्दों के होने पर भी किसी भी तरह से यदि पदार्थ की प्राप्ति सिद्ध नहीं होती तो वहाँ 'यत्' आदि शब्दों में स्वार्थमात्र की प्रसिद्धिद्योतकता को स्वीकार करके विधित्व भी स्वीकार किया जाता है। जैसे 'यदाग्नेयोऽष्टाकपाल:' में आग्नेय याग का विधान है। भाष्यकार यहाँ इसी तथ्य को अन्य उदाहरण से प्रकट करते हैं—**'वसन्ताय कपिञ्जलानालभते, प्रणीयादिन्नाथमानायतव्यान्, आस्य जानन्तो नाम चिद्विविक्तन' इत्यादि मन्त्राणामपि बहुशो विधित्वस्वीकारात्।** उक्त मन्त्रों में भी जैसे विधि स्वीकृत है वैसे यहाँ पर भी 'मदन्ति' पद से विधित्व स्वीकार होगा। दूसरा समाधान प्रस्तुत करते हैं—**वस्तुतो मदन्ति।** जैसे 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाऽच्युतो भवति' में 'भवति' पद में विधिवाचक लेट्लकार की कल्पना करके अग्निदेवता और अष्टकपालों में संस्कृत पुरोडाश द्रव्य वाले यज्ञ का विधान स्वीकृत है वैसे ही 'मदन्ति' में लेट्त्व की कल्पना करके 'मद' धातु के अर्थ का विधान होगा और उसका भावार्थाधिकरणन्याय से भावना में करणत्वेन सम्बन्ध होगा। प्रकृत मन्त्र में 'मद' धातु का अर्थ कहते हैं—**चिद्देव्यभिन्नात्ममात्रविषयकवृत्तिविशेषबोधकपदमदधात्वर्थस्यैव करणत्वम्।**

आत्मा चित्स्वरूप है और वही ब्रह्म है। चिद्रूपिणी देवी से अभिन्न नित्यशुद्धबुद्धमुक्तस्वभाव आत्मा में ही पर्यवसित चित्त की वृत्ति 'मद' धातु का अर्थ है जिसे साहित्य की रसप्रक्रिया में तन्मयीभवन कहा गया है। 'धात्वर्थ: केवल: शुद्धो भाव इत्यभिधीयते' अर्थात् धातु का अर्थ ही भाव पदार्थ है। धात्वर्थ से ही फलजनक अपूर्व की उत्पत्ति होती है, ऐसा पूर्वमीमांसा के द्वितीय अध्याय के भावार्थाधिकरण में कहा गया है। तथा च, यह पारमर्ष सूत्र है—**भावार्था: कर्मशब्दास्तेभ्य: क्रिया प्रतीयेत, एष ह्यर्थो विधीयते।** इसका अर्थ है- प्रत्यय अंश से भावना के प्रतिपादक और प्रकृति (धातु) अंश से यागादि कर्मों के बोधक जो आख्यात शब्द हैं, उन्हीं से अपूर्व की प्रतीति होती है। अथवा भावार्थ अर्थात् भावनाप्रयोजनक जो कर्मबोधक शब्द धातु हैं उन्हीं से अपूर्व की प्रतीति होती है। यही धात्वर्थ (कर्म) पदश्रुति से भावना में करणत्वरूप में विहित होता है— यागेनाऽपूर्वं कृत्वा स्वर्गादि फलं भावयेत्। मन्त्र में 'मदन्ति' से बोधित स्वात्ममात्रपर्यवसित वृत्तिविशेष अर्थ

ही अन्तर्याग कहा जाता है— **अन्तर्यागपदवाच्यतापि तस्यैव**। इसमें हेतु दिखाते हैं— **यजते वृत्तिविशेषवाचकत्वात्**। वृत्तिविशेष का वाचक 'यज' धातु है, अतः अन्तर्याग आत्मा में तल्लीनता है। इस तरह 'फलवत्सन्निधावफलं तदङ्गम्', इस न्याय से 'सुधया परिस्रुता' से बोधित द्रव्यविशेष का मत्वर्थलक्षणा से धात्वर्थ से ही सम्बन्ध होगा। जैसे 'सोमेन यजते' में 'सोमवता यागेन इष्टं भावयेत्' बोध होता है वैसे ही 'पीयूषीकृतद्रवद्रव्यवता यागेन स्वर्गं (नाकस्य पृष्ठम्) त्रैपुरं लोकञ्च भावयेत्', यह बोध होगा। इसी तथ्य को प्रकट करते हैं—**परिस्रुतेति मत्वर्थलक्षणया धात्वर्थेनान्वेति**। सभी कारकों का भावना में ही अन्वय जब स्वीकृत है तो कैसे द्रव्यविशेष का धात्वर्थ से अन्वय होगा? इस आशङ्का का समाधान करते हैं—**भावनान्वित-योरुभयोररुणैकहायनीन्यायेन वा पार्ष्ठिकोऽन्वयः**। 'अरुणया पिङ्गाक्ष्यैक-हायन्या सोमं क्रीणाति', यहाँ पर सोमक्रयसाधनत्वेन विहित 'आरुण्य' गुण का आख्यातार्थ आर्थीभावना में करणत्वरूप से प्राथमिक अन्वय होने के बाद एकहायनी (ऐकवर्षिकी) गो के साथ सम्बन्ध होता है। इसी तरह यहाँ भी 'परिस्रुत्' द्रव्य का पार्ष्ठिक (बाद में होने वाला) धात्वर्थ याग से सम्बन्ध मत्वर्थलक्षणा स्वीकार करके होगा। मन्त्र का उत्तरार्ध **'नाकस्य पृष्ठे महतो वसन्ति परं धाम त्रैपुरं चाविशन्ति'** भाग भावना में भाव्य (फल) का बोधक रात्रिसत्रन्याय से है, इस चातुर्थिकन्याय को प्रकट करते हैं—**''प्रतितिष्ठन्ति इत्यस्येव 'नाकस्य पृष्ठे' इत्यादेर्भा-व्यसमर्पकत्वम्।''** जिस द्रव्य आदि का कर्म में अङ्गत्व सिद्ध है वहाँ उनकी फलश्रुति को स्तुति मात्र में अर्थवाद माना गया है—**द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्**। जिनका अन्यत्र अङ्गत्व सिद्ध नहीं है वहाँ अर्थवाद में निर्दिष्ट फल को ही कर्म का फल मान लिया जाता है। यही आर्थवादिकफलकल्पना रात्रिसत्रन्याय है—**फलमात्रेयो निर्देशादश्रुतावनु-मानं स्यात्**। अर्थात् आत्रेय ऋषि के मत में जहाँ अर्थवाद नहीं है वहाँ स्वर्ग की कल्पना विश्वजिन्न्याय से होगी, यह सूत्रार्थ है। **'ज्योतिर्गौरायुरिति त्र्यहा भवन्ति'**, इस रात्रिसत्रविधि के शेष में **'प्रतितिष्ठन्ति ह वा य एतास्त्रिस्रो रात्रीरुपयन्ति'**, यह अर्थवाद पठित है जिसमें 'प्रतिष्ठा' फल का निर्देश है। यहाँ पर भी स्वर्गप्राप्ति और निःश्रेयस दोनों फल संयोगपृथक्त्वन्याय से होगा, इस अर्थ को ध्वनित करते हैं—**चकारेण फलसमुच्चयकथनात्**। इसी को सुस्पष्ट करते हैं—**'पूत एव तेजस्वी अन्नाद इन्द्रियावी पशुमान् भवति'**। यह वैश्वानरयाग का फल है जो पुत्र की उत्पत्ति के पश्चात् सूतक से निवृत्ति होने पर पिता के द्वारा किया जाता है। उक्त वाक्य के पूर्व का अंश यह है—**यस्मिञ्जाते एतामिष्टिं निर्वपेत् स....**। वैश्वानरयाग का विधिवाक्य यह है—**वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते**। वहाँ पर जैसे अनेक फलों के स्वामी का याग में अधिकार है वैसे ही यहाँ पर भी स्वर्गपृष्ठ और त्रैपुरधाम दोनों फलों के स्वामित्व को लेकर अधिकार है—**सम्बन्धिसंवलिताधिकारत्वम्**। फलसम्बन्धिनो यजमानस्यानेकफलेषु समिलितं फलस्वाम्यमित्यर्थः। इसी का तात्पर्य प्रकट करते हैं—**अनेकेषां पुरुषार्थानां व्यासज्यवृत्तिफलत्वमिति यावत्**। यहाँ पर पुरुषार्थत्व का अभिप्राय 'फलोद्देशेन विहितत्वम्', अर्थात् फल के लिए वेदों से ही ज्ञापित होने वाला धर्म नहीं है। अनेक फलों

में फलत्व पर्याप्ति सम्बन्ध से रहता है, जैसे दो में द्वित्व। अग्नीषोम में देवतात्व व्यासज्यवृत्ति धर्म है। वह अग्नि और सोम में अलग-अलग नहीं रहता। अलग अलग रहने वाला धर्म प्रत्येकपर्याप्त कहा जाता है, जैसे गो में गोत्व जाति। प्रत्येक गो में गोत्व अलग अलग रहता है। श्रीभगवती की पूर्वोक्तप्रकारीय उपासना से यावत् फलों की प्राप्ति हो जाती है, प्रत्येक फल के लिए अलग-अलग प्रयोगों की आवश्यकता नहीं पड़ती, यह अभिप्राय है। इसी को सुस्पष्ट करते हैं—**"न पुनः 'सर्वेभ्यः कामेभ्य' इतिवत् प्रत्येकपर्याप्तम्"**। पूर्वमीमांसा के चतुर्थाध्याय के तृतीय पाद के दसवें अधिकरण में 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यादि सर्वकामवाक्यों को लेकर विचार किया गया है जहाँ यही सिद्धान्त प्रस्तुत है कि सारे फलों के लिए दर्शपूर्णमास आदि यागों का विधान है। अर्थात् इन यज्ञों के अनुष्ठान से मनोभिलषित सभी फलों को प्राप्त किया जा सकता है। पुनः ग्यारहवें अधिकरण में यह विचार किया गया है कि एक प्रयोग में ही सारे फलों (काम) की प्राप्ति होती है या प्रयोगभेद से? उद्दिश्यमान फल के साहित्य की विवक्षा होने पर विशिष्टोद्देशनिमित्तक वाक्यभेद होने लगेगा, अतः फलभेद से प्रयोगभेद आवश्यक है। कामपदवाच्य फल का विशेषण होने से 'सर्वत्व' की ग्रहैकत्व की तरह अविवक्षा है, इस बात को मयूखमालिकाकार शास्त्रदीपिका की व्याख्या में इस तरह सुस्पष्ट करते हैं—

"इह हि मुख्योऽपि सर्वशब्दो नोद्देश्यसमर्पकः सापेक्षत्वात्, किन्तु निरपेक्षत्वात् कामशब्द एव। ततश्च ग्रहत्ववत् सर्वत्वस्योद्देश्यप्रतीतिपर्यवसानार्थत्वाभावादुद्देश्यविशेषणत्वमेवेति ग्रहैकत्ववदविवक्षितत्वान्न साहित्येन फलत्वम्।"

'ग्रहं संमार्ष्टि' से सोमरस के पात्रों के शोधन का विधान है जहाँ 'ग्रहत्व' की विवक्षा है। वाक्यभेद की प्रसक्ति होने के कारण 'ग्रह' में विद्यमान एकत्व की विवक्षा नहीं है, अतः सारे ग्रहों (पात्र) का शोधन सिद्ध हो जाता है। 'सर्वेभ्यः कामेभ्यः' में 'काम' शब्द विशेष्य होने से निरक्षेप है और 'सर्व' पद विशेषण होने से विशेष्यसापेक्ष है। अतः उद्देश्य का बोधक फल का वाचक 'काम' पद ही होगा। जैसे ग्रहत्व का उद्देश्य की प्रतीति में पर्यवसान (समाप्ति) होता है वैसे 'सर्वत्व' का उद्देश्यप्रतीति में पर्यवसान नहीं होगा। इस तरह 'सर्वत्व' उद्देश्य 'काम' का विशेषण ही होगा। 'ग्रहं संमार्ष्टि' में जैसे ग्रहगत एकत्व की अविवक्षा मानी गयी है वैसे ही 'सर्व' शब्द से बोधित फलों के साहित्य की विवक्षा नहीं होगी।

फलतः एक-एक फल की कामना होने पर भिन्न-भिन्न प्रयोग होंगे। यहाँ पर स्वर्ग के ऊपर निवास और मुक्त के लिए प्राप्य पद, इन दोनों फलों की प्राप्ति एक ही प्रयोग से हो जायेगी, ऐसा आचार्य ने **'अनेकेषां पुरुषार्थानां व्यासज्यवृत्तिफलत्वमिति यावत्'** से द्योतित किया है। फल को ही मुख्यतः पुरुषार्थ माना जाता है—पुरुषैरर्थ्यते प्रार्थ्यत इति पुरुषार्थः। फल के साधनों में पुरुषार्थत्व साक्षात् न होकर फल द्वारा ही है। उक्त वाक्य का अर्थ यही है कि भगवती की पूर्वोक्तप्रकारीय उपासना से प्राप्त होने वाले फलों में साहित्य की विवक्षा है। ऐसा 'परं धाम त्रैपुरं चाविशन्ति' में 'च' शब्द से सिद्ध होता

इव हि देवा' इति श्रुतेः। **पुनः पुनः प्रकाशमानबुद्धिव्यापनलहरी।** 'क ए ई ल ह्रीँ'—मियत इति म माङ्माने शब्दे च (क्विप्), परोक्षश्रुत्या लुप्ताकारत्वेन वा गृह्यते। 'मितेरपीतेर्वे'ति श्रुतेः। 'क ए ई' लह्रीँ' तद्युक्ता परानपेक्षं यथा तथा स्वयमेवावबोधितानीत्यर्थः। 'क ए ई ल ह्रीँ'—अनेन धर्माख्यपुरुषार्थसाधन-ब्रह्मचर्यसमृद्धिनिर्मितिरुक्ता। तस्मादेव 'वाग्भव' मित्युच्यते। वाक्प्रवृत्तिजाल-निमित्तत्वात्। अनेन ब्राह्मणैरुपास्यमान-गायत्रीमन्त्रसार उक्तः। इष्टदेवताप्रशंसनात्म-कत्वेन वाग्जालप्रवर्तकत्वात् ऋग्वेदात्मकत्वम्। हन्यन्ते ऐहिकामुष्मिकतापत्रयाणि इति 'ह'। 'हन हिंसागत्योरि'त्यस्मात् क्विप्। अन्तलोप औणादिकः। अनेन धन-कनक-वाहन-भूम्यादिसम्पत्प्रचय इति। स अवसादनार्थात् सुनोतेः स्यतेर्वा 'अन्' प्रत्यये कृते बाहुल्येन लुप्तान्त्यवर्णत्वेन गृहीतः। अनेन सकलराज-परिच्छदजालमुक्तम्। काम्यन्ते स्रक्चन्दनवनितादिमदनविषयभोगा इति 'कमु कान्तौ' इत्यस्मात् पूर्ववत् प्रक्रिया। अनेन सकलैहिकामुष्मिकभोग उक्तः। ह च स च क च 'ह स काः'। 'हीयते' प्राप्यते इति 'ह'। 'ओहाङ्गता' वित्यस्माद् धातोः 'आतोऽनुपसर्गे कः'। हसकानां हः 'हसकहः'। उपद्रवनिवृत्त्यर्थं सञ्चयकामभोगावाप्तिरिति यावत्। तस्य 'लहरी' आधिक्यम्। 'ईयते' प्रकाश्यते अनेन दिगन्तेषु कीर्तिजालमिति 'ई दीप्ता'वित्यस्माद् क्विप्। बाहुल्यादन्त्यलोपः। 'हसकहलह्रीं च ई च' अनयोः सवर्णदीर्घः, ह स क ह ल ह्रयः, तासां निर्माणं 'ह स क ह ल ह्रीँ'। अनेन अर्थकामरूपपुरुषार्थनिर्मितिरुक्ता। तस्मादेव कामराजत्वम्। अनेन क्षत्रियवर्णोपास्यमानत्रिष्टुप्छन्दःसारत्वमुक्तम्। स्वकीयाभीष्टसाधककर्मजात-विधायकत्वाद् यजुर्वेदस्य अर्थकामयोः क्रियासाध्यत्वात् यजुर्वेदात्मकत्वम्। सकलकलाभिः अवयवैः शिवादितत्त्वैर्वा सहिता सकला, अथवा सकलम्। कलाभिः चतुःषष्टिकलाभिः वा सहिता सकला। अथवा सम्यक् कलयतीति सकला। 'हृञ् हरणे' इत्यस्माद् धातोः 'हरति सर्वम् अन्तकाले' इति व्युत्पत्त्या च 'इ' प्रत्ययः। बाहुल्याद् गुणाभावेन यणादेशः। 'ह्रीः' संहर्तृ- शक्तिः, 'ईयते प्रकाश्यते सर्वजगदनया' इति सृष्टिशक्तिः। 'इदि परमैश्वर्ये' इत्यस्माद् धातोः क्विप् व्यञ्जनलोपश्च। सर्वेषां नियन्तृत्वेन वर्तत इति इः। ह्रीश्च ई च ईश्च, 'अकः सवर्णे' दीर्घः। समानरूपत्वादेकशेषः। ह्रीं संहृति-सृष्टि-स्थितिशक्तिः। अथवा विहरति सकलप्रपञ्चरूपेणेति ह्रीः। विहरणाद्धरतेरिन् प्रत्ययः। हरिरूपेण विहाररूपेण इन्दति परमानन्दयितृत्वेन वर्तत इति ह्रीः। अथवा ह इति क्विबन्तः लुप्तसकारः शब्दः। प्रपञ्चसंहृतिवाचक ई प्रकाशः आत्मैक्यगमनं यणादेशः। ह्री सकलप्रपञ्चदेहेन्द्रियादिकं द्रवीकृत्य अनिर्वचनीयप्रकाश-

रूपात्मैक्यगमकमित्यर्थः। अथवा—हृत्पुण्डरीकमध्यसुषिरान्तरदहराकाशे वर्तमानमहाप्रकाशान्तर्गतातिसूक्ष्मातिप्रकाशात्मस्थानोर्ध्वगतदीपशिखा। **'तस्यान्ते सुषिरं सूक्ष्मम्'** इत्युपक्रम्य **'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः'** इति नारायणोपनिषदुक्तप्रकारेत्यर्थः। सकला च सा ह्रीश्च 'सकलह्री'। 'इषु इच्छायाम्' इत्यस्माद् धातोः इष्यते अत्यन्ताभीष्टत्वेन सर्वैः ईशविष्ण्वादिस्तम्भ-पर्यन्तचेतनवर्गैः काङ्क्ष्यत इति ई। 'इत्युषिभ्यां क्विप् व्यञ्जनलोपश्च। निरतिशयानन्दनैरन्तर्यम्। 'ई हिमवतो हिमपादेषूत्तरेष्वि'ति श्रुतेः। तस्य प्रमितिर्लुप्ताकारो मकारो गृह्यते। 'मितेरपीतेर्वा मिनोति ह वा इदं सर्वम् अपीतिश्च भवती'ति श्रुतेः। म् इति नादानुकारी शब्दः अव्ययम्। प्रमितिर्नाम यथार्थानुभवः। अनेन परब्रह्मणश्चिंच्छक्तिरुच्यते। नादस्य शुद्धचैतन्यस्य स्थूलरूपत्वात् शुद्धचैतन्यात्मकचिच्छक्तिः उन्मनीनादादिभ्योऽतीतत्वात् अवाङ्मनसगोचरा मिनोति वा नादः सर्वात्मनि तादात्म्येन। ई निरतिशयसत्या-नन्दानुभवप्रकाशकनादात्मकचिच्छक्तिरित्यर्थः। तत्र खलु प्रपञ्चो मीयते सृज्यते च। एषा ऋगनुष्टुप् छन्दः, सकलह्रीरूपं 'ह्रीं सकल ह्रीं च तत् ईश्च ह्रीं। सकलं च तत् ह्रीं च सकलह्रीं। सकलहृदयाकाशवर्तिदीपशिखान्तर्गततत्त्वा-धिष्ठातृनिरतिशयसत्यानन्दानुभवप्रकाशनादात्मकचिच्छक्तिः। अनेन मोक्ष-साधननादलययोगानन्दानुभव उक्तः। तस्मादेव शक्तिखण्ड इत्युच्यते, चित्तवृत्तिनिरोधप्रधानत्वात्। वैश्यजात्युपास्यमानजगतीच्छन्दःसार उक्तः। सामवेदस्य गानप्रधानत्वेन नादविलीनचित्तत्वात्। अत्र नादलययोग्यस्य उपरि वर्णितत्वाच्च अस्य मन्त्रस्यैवमर्थः। 'क ए ई ल ह्रीं, ह स क ह ल ह्रीं, स क ल ह्रीं' सम्यक् कलयतीति क एई ल ह्रीं, ह स क ह ल ह्रीं स क ल ह्रीं इत्थं पञ्चदश्या अर्थः। उत्तरोत्तरप्रकाशबुद्धिव्यापनातिशयवाग्वृद्ध्यनिष्टनिवारणभोगभाग्यादिवृद्ध्यतिशय-कीर्तिजयजनकदहरान्तर्गतदीपशिखान्तर्गतसर्वतत्वाधिष्ठातृनिरतिशयानन्द-संविदनुभवप्रकाशकनादातीता चिच्छक्तिरिति। सामवेदस्य हकारस्तोत्राक्षरप्राचुर्येण निधनस्तोमप्रधानत्वेन च अस्य मन्त्रस्य सामवेदात्मकत्वम्। हकारप्राचुर्यात्।

**'सामवेदो वै ब्राह्मणानां प्रसूतिरि'ति** श्रुत्या ब्राह्मणानामेवावश्यक-त्वेनोपासितव्यत्वम्। पुराणागमादिष्वपि अङ्गीकृतत्वादितरवर्णानामपि उपास्य-त्वम्। अतश्चतुर्वर्णानामपि साधारण्यं नान्येषाम्। एतन्मन्त्रार्थमननशीलानां सर्वातिशयाभीष्टपरम्पराः सिद्ध्यन्ति। इदमेव तत्तवम्—'गन्धद्वारां', 'चित्रावसो', आवहन्ती'त्यादिभिः मन्त्रैः श्रुतयः संस्तुवन्ति। अतश्चतुर्णां वेदानामपि सारभूतं ब्रह्मक्षत्रवैश्यशूद्राणामेवोपास्यत्वम्। त्रिवेदमयत्वात् 'त्रीणि पदा निहिता गुहासु,

यस्तद् वेद सवितु:पितासदि'ति श्रुते:। तिसृषु स्थानेषु त्रयाणां क्रमाद् वेदक्रमेण मूलहृन्मूर्धगतत्वम्। वेदानां तत्तत्स्थानेषु बलवत्तरतया उच्चार्यमाणत्वात् मालिन्यान्तर्विद्यमानत्वात् उष्णिक्त्वम्। हृल्लेखाया विद्यमानत्वात् पङ्क्तित्वम्। अत एवोक्तम् अन्यखण्डस्य स्वतन्त्रतयोक्तत्वात् अतिच्छन्दस्त्वं त्रैकवर्णम्। 'मया सोऽन्नमत्ति, यो विपश्यति, यं प्राणिति, य ईं शृणोति' इत्युक्तम्। 'यदीं शृणोत्यलकं शृणोति, यं कामये तं तमुग्रं कृणोमि, तं ब्रह्माणं तमृषिं तं सुमेधा' इति कृत्स्नस्य मन्त्रस्य पञ्चदशवर्णात्मकत्वात् 'आपञ्चदशे'ति काण्डानुक्रमणी-वचनाच्च गायत्रीमयत्वम्। स्वतन्त्रतयोपास्यमानमालिनीवीजात्मकमन्त्रस्य बिन्दु-नादवर्णद्वयात्मकमन्त्रस्यात्र विद्यमानत्वाद् 'द्व्यक्षरं देव्युष्णिगि'तिवचनात् उष्णिक्छन्दोमयत्वम्। मनो: खण्डत्रयात्मकत्वादनुष्टुब्छन्दोमयत्वम्। अन्त्यस्य खण्डस्य प्राधान्येनोक्तत्वात् तस्याष्टवर्णात्मकत्वेनाऽतिच्छन्दोमयत्वम्। तत्रापि द्वितीयमायावीजरहिते सप्तवर्णात्मकमनोर्विद्यमानत्वात् जगतीच्छन्दोमयत्वम्। पञ्चवर्णात्मकस्य शक्तिबीजस्य विद्यमानत्वात् पङ्क्तिच्छन्दोमयत्वम्। महामाया-व्यतिरेकेण चतुर्वर्णात्मकत्वात् बृहतीमयत्वम्। एवं सर्वच्छन्दोमयीयं विद्या मन्त्रब्राह्मणोपनिषद्रूपखण्डत्रयात्मिका। एतां विद्यामेव उत्तर-नारायणानुवाक: सकलप्रपञ्चसारात्मकब्रह्मतेजोऽभिवृद्धिमयत्वेन अभिष्टौति। अत एव शैव-वैष्णव-गाणपतसौरमन्त्रेष्वपि संयोज्योपास्यते। अत एव सकलपुरुषार्थावाप्तिपूर्वकात्मज्ञान-प्रकाशत्वेन जीवब्रह्मसमरसीभावमोक्षसाधनानीति।।९।।

**श्रीभास्करारायप्रणीतभाष्यम्—**

कामराजोपासितां विद्यामुपदिश्य लोपामुद्रोपासितां विद्यामुदेष्टुं नवमीमृचमाह—षष्ठमिति।

अस्या एव विद्याया मूलत्रिकं प्राथमिकमक्षरत्रयम् उन्मूल्येति शेष:। तत्स्थानेऽपि षष्ठादिवर्णत्रयमेव निवेशयन्तो जापका विद्याद्वयान्यतरेण संशुद्धसत्त्वोपाधिकं परशिवं तुष्टुवांसस्तुवन्तो जपन्त: अमृतत्वं भजन्ते विद्याजपेन मोक्षं भावयेदित्यर्थ:। ईशं विशिनष्टि—काममिति। 'सोऽकामयत बहु स्यां प्रजायेय' इति श्रुतिप्रतिपाद्यत्वेनेक्षत्यधिकरणे निर्णीतम्। कल्पकं जगत्कल्पनाधिष्ठानं जन्माद्यधिकरणोक्तम्। कविम् वेदप्रणेतारम्। कथ्यम् वेदवेद्यम्। शास्त्रयोन्यधिकरणे वर्णकद्वयेनोक्तं परं ब्रह्मैवेति तु विशेषणसमर्पितोऽर्थ:। 'अजरा पुराणी' इत्यादिभिर्ब्रह्मलिङ्गैरिह पुंलिङ्गैर्वक्ष्यमाणकामकलाध्यानगतस्त्रीलिङ्गैश्च परदेवता-यास्त्रिविधं ध्यानं विहितं भवति। तथा चोपबृंहितं कुलार्णवे—

**'पुंरूपां वा स्मरेद्देवीं स्त्रीरूपां वा विचिन्तयेत् ।**
**अथवा निष्कलं ध्यायेत् सच्चिदानन्दलक्षणम् ।। ' इति ।**

यद्यपि परोपास्तौ निष्कलं जपेत् पुंरूपं बहिर्यागे स्त्रीरूपमध्येयमिति व्यवस्था सुवचा तथापि स्त्रीपुंसयोः समप्राधान्यस्य वक्ष्यमाणतया सम्प्रदायाच्चैच्छिक एव विकल्पः । मनुचन्द्राद्युपासितविद्यानामन्यासामपि त्रिपुरातापिन्यामुद्धारदर्शनेऽपि प्रकृते द्वयोरेवोद्धारस्तास्वनयोराधिक्य-ध्वननार्थः । अत एव ज्ञानार्णवे द्वादशधा विद्या उद्धृत्य **'विद्याद्वयमिदं भद्रे देवानामपि दुर्लभम्'** इत्यादिनोपबृंहितम् । अनयोरपि मध्ये कादिविद्याया एव प्रथममुद्धारादाधिक्यध्वनिः । अत एव **'श्रीविद्यैव तु मन्त्राणां तत्र कादिर्यथा परा'** इति ब्राह्मण्डपुराण उपबृंहितम् । **वस्तुतस्सर्वासां विद्यानाम-भेदात्तारतम्योक्तिः प्रशंसामात्रमिति समर्थितं सेतुबन्धेऽस्माभिः** । अत एव श्रीमदाचार्यभगवत्पादैर्वैपरीत्येनैनयोरुद्धारः प्रदर्शितः सौन्दर्यलहर्याम् । तत्रापि प्रकृतश्रुत्यानुगुण्याय शिवशक्तिकामपदानाञ्चान्यथा व्याख्यानं कतिपयानां क्लिष्टत्वान्निरर्थकत्वाच्च नादर्तव्यम् । अत्रान्तर्यागस्येव प्रकरणित्वेन तदीय-द्रव्यानुवादेन गुणान्तरसमुच्चयस्य द्वादश्यामृचि विधास्यमानत्वेन प्रकरणानुवृत्तेर्वक्तव्यतया तन्मध्यपतितस्य जपस्य प्रकरणादन्तर्यागाङ्गत्वात् । 'अमृतं भजन्ते' इत्यपापश्लोकश्रवणवदर्थवादः[1] । मन्त्रत्वेऽपि [2]विधित्वस्येवार्थ-वादत्वस्यापि स्वीकारे बाधकाभावात् । 'तिस्रः पुरः' इत्यादेस्त्वन्तर्याग-विधिशेषत्वेऽपि नार्थवादत्वम्, विधिशेषत्वस्यार्थवादव्याप्यत्वे मानाभावात् । अर्थवादत्वेऽपि वा भूतार्थवादत्वेन स्वार्थे प्रामाण्याच्च । न च द्वादश्यामृचि स्थूलोपास्तिर्भिन्नैव बहिर्यागरूपा विधीयत इति वाच्यम्, तथापि पञ्चदश्यामृचि मदधात्वर्थविवरणेनोपसंहारदर्शनात् प्रकरणानुवृत्तेर्दुर्वारत्वात् । वस्तुत उपास्तित्रयस्य समप्राधान्यमेव, विधित्रयेऽपि फलश्रवणेनान्यतमस्य प्रकरणिकल्पने विनिगमना-विरहात् । [3]आग्नेयादिषट्कस्येव मिलितानामेव च फलजनकत्वम् ।

---

१. पर्णमय्यधिकरण (४.३.१) न्यायेनेत्यर्थः। 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति', इत्यत्रापापश्लोकश्रवणस्यार्थवादत्वं यथा साधितं तद्वदिति भावः।

२. 'कपिञ्जलानालभेत' इत्यस्य मन्त्रत्वेऽपि यथा विधित्वं स्वीकृतं तथेत्यर्थः।

३. दर्शपूर्णमासयोः प्रतिपर्व त्रयस्त्रयो यागाः प्रधानभूता विहिताः- आग्नेयः उपांशुयाजः, अग्नीषोमीयपुरोडाश इति पौर्णमास्याम्, आग्नेयः ऐन्द्रं दधि ऐन्द्रं पय इत्यमावास्यायाम्। एतेषां षण्णां मिलितानां 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यधिकारवाक्येन फलजनकत्वमुच्यते यथा, तथोपास्तित्रयस्य मिलितस्य फलजनकत्वमित्यर्थः।

'अन्तर्यागबहिर्यागौ गृहस्थस्सर्वदाचरेत् ।
चक्रराजार्चनं विद्याजपो नाम्नाञ्च कीर्तनम् ।।
भक्तस्य कृत्यमेतावदन्यदभ्युदयं विदुः ।।'

इत्यादिवचनात् । अधिकारिविशेषेण तु केवलान्तर्यागजपयोः फलजनकत्वन्तु वचनात् [१]असोमयाजिनोऽग्नीषोमीयपुरोडाशसाहित्याभावेऽपि फलसिद्धिवदित्यादिकं न्यायविद्भिरूह्यम् ।।९।।

## भाषाव्याख्या

इस तरह पररूपोपासना का विधान करके सूक्ष्मरूप से उपासना का विधान आठवी ऋक् से किया गया। एवम् कामराज से उपासित विद्या का उपदेश हो जाने पर लोपामुद्रा से उपासित विद्या के उपदेश के लिए नवमी ऋक् को उपस्थापित करते हैं—**षष्ठं सप्तममथ।**

श्रीरामानन्दतीर्थ ने 'मूलत्रिकमादेशयन्तः' पाठ स्वीकार किया है तथा श्रीभास्करराय ने 'मूलत्रिकमावेशयन्तः' पाठ माना है। शाखाभेद से स्वीकृत दोनों पाठों का एक ही अर्थ है। पूर्वोक्त विद्या के आदि में ककार होने से उसे कादिविद्या कहते हैं। इस विद्या के आदि में हकार होने से यह हादिविद्या कही जाती है। कादिविद्या के छठें, सातवें और इन दोनों वर्णों के बाद वायुबीज (वह्निसारथि) को पूर्वोक्त कादिविद्या के मूल (आदि) में विद्यमान तीन वर्णों के स्थान पर रख देने पर लोपामुद्रा से उपासित हादिविद्या की निष्पत्ति हो जाती है। पूर्वोक्त विद्या का छठा वर्ण हकार और सातवाँ सकार है। अर्थात् अस्याः कादिविद्याया मूलत्रिकस्थानापन्ना हकारसकारककारा भवन्ति। इस प्रकार से योजना करके उपासक श्रुतिप्रतिपाद्य (कथ्य), कवि अर्थात् सर्वज्ञ वेदप्रणेता, जगत्कल्पना के अधिष्ठान (कल्पक), जगत्सिसृक्षा से सम्पन्न ईश्वर (काम) की स्तुति करते हुए विद्याजप से मोक्ष प्राप्त करते हैं, यह मन्त्र की अक्षरार्थयोजना है। श्रीभास्करराय ने मन्त्र में आये 'ईश' शब्द का अर्थ संशुद्धसत्त्वोपाधिक परशिव किया है। **सम्यग्रूपेण शुद्धं सत्त्वमेवोपाधिर्यस्य स परशिवः।** ईश के ही काम, कल्पक, कवि और कथ्य विशेषण हैं। इनका प्रतिपादन वैयासकि ब्रह्मसूत्र के विभिन्न अधिकरणों में किया गया है। 'काम' का प्रतिपादन **'ईक्षतेर्नाशब्दम्'** सूत्र से उक्त ईक्षत्यधिकरण में है। **'जन्माद्यस्य यतः'** सूत्रोक्त जन्माद्यधिकरण में 'कल्पक' का

---

१. 'आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाग्नीषोमीयो भवति' इति वाक्येनाऽसोमयाजिनोऽग्नीषोमीयपुरोडाशेऽधिकारो नास्ति। अनुष्ठितसोमयागस्यैव यजमानस्याऽग्नीषोमीयपुरोडाशेऽधिकारः। तत्र योऽसोमयाजी तत्कर्तृरुदर्शपूर्णमासयोरग्नीषोमीयपुराडाशाभावेऽपि कर्मणः फलसाधनत्वं स्वीक्रियते यथा, तथान्तर्यागजपयोः फलसाधनत्वमित्यर्थः।

प्रतिपादन है। 'कवि' और 'कथ्य' का प्रतिपादन **'शास्त्रयोनित्वात्'** सूत्रोक्त शास्त्रयोन्यधिकरण में दो वर्णकों में श्रीभगवत्पाद ने किया है। विशेषणों से बोधित अर्थ परब्रह्म परमात्मा ही हैं, इस बात को ध्वनित करते हैं—**परं ब्रह्मैव तु विशेषणसमर्पितोऽर्थः।** मन्त्रलिङ्गों से प्राप्त परदेवता के त्रिविध ध्यान को कहते हैं—**'अजरा पुराणी' इत्यादिभिर्ब्रह्मलिङ्गैः।** इसी उपनिषद् में आये 'अजरा पुराणी' आदि पद 'ब्रह्म' अर्थ के बोधन के सामर्थ्य से युक्त हैं अतः इन्हें ब्रह्मलिङ्गक पद कहा गया है। इसी नवम मन्त्र में काम, कवि आदि पद भी 'ब्रह्म' अर्थ के ही वाचक हैं जिनका पुंल्लिङ्ग से निर्देश है। कामकला के ध्यान में आये आगे के पद भी स्त्रीलिङ्ग में पर ब्रह्म को ही इङ्गित करते हैं। इससे परदेवता का ध्यान तीन प्रकार से विहित है, ऐसा निश्चित हो रहा है।

इसी श्रौत ध्यानविधियों का कुलार्णवतन्त्र में इस तरह उपबृंहण (स्पष्टीकरण) है—

**'पुंरूपां वा स्मरेद् देवीं स्त्रीरूपं वा विचिन्तयेत्।**
**अथवा निष्कलं ध्यायेत् सच्चिदानन्दलक्षणम्॥'**

तात्पर्य प्रकट करते हैं—**यद्यपि परोपास्तौ।** यद्यपि परदेवता की उपासना में निष्कल पुंरूप में जप हो तथा बहिर्याग में स्त्रीरूप में ध्यान हो, यह नियम (व्यवस्था) कहा जा सकता है तथापि स्त्री और पुरुष की प्रधानता समान होने के कारण तथा सम्प्रदाय के अनुसार भी तीनों प्रकार के ध्यानों का स्वेच्छापूर्वक विकल्प ही उचित है। भगवान् श्रीनारायण पुरुषरूप में होकर भी मोहिनी के अवतार में स्त्रीरूप में प्रकट हुए हैं। दुर्गासप्तशती में नारायण की शक्ति का भी ताद्रूप्य प्रतिपादित है। फलतः परदेवता का ध्यान पुरुष, स्त्री और निष्कल अर्थात् निर्विशेषचिदादिरूप में भी किया जा सकता है। 'कामकला' की व्याख्या में श्रीरामानन्दतीर्थ जी ने कला का अर्थ विमर्शशक्ति किया है जो अग्नीषोमरूपा और काम से अभिन्न है। **काम्यते अभिलष्यते स्वात्मत्वेन परमार्थविद्भिर्महद्भिर्योगिभिर्यः स कामः परं ब्रह्म।** अर्थात् अपनी आत्मा के रूप में योगी जिनकी कामना करें वे भगवान् श्रीनारायण ही काम हैं। वे जब अपनी विमर्श-शक्ति को स्वयम् में विलीन कर लेते हैं तो उपनिषदों में 'सच्चिदानन्दस्वरूप' से प्रतिपाद्य निष्कल कहे जाते हैं। इस रूप की भी उपासना श्रुतियों में कही गयी है। कादि और हादि विद्याओं का ही आठवीं और नवमी ऋक् में उल्लेख है। मनु, चन्द्र आदि से उपासित अन्य विद्यायें (मन्त्र) भी हैं। उन्मनी श्रीविद्या, वरुणोपासिता, धर्मराजोपासिता, वह्न्युपासिता, नागराजोपासिता, वायूपासिता, बुधोपासिता, ईशानोपासिता, रत्युपासिता, नारायणोपासिता, ब्रह्मोपासिता, जीवोपासिता, कुबेरोपासिता, अगस्त्योपासिता आदि अनेक विद्याओं को धर्मसम्राट् श्रीस्वामीकरपात्रीजी ने श्रीविद्यारत्नाकर ग्रन्थ में सङ्कलित किया। विज्ञ जन वहीं से समझ लेंगे। इस उपनिषद् में कादि और हादि का ही जो प्रतिपादन है वह अन्य विद्याओं की अपेक्षा से इन दोनों विद्याओं की प्रधानता को प्रकट कर रहा है। कादि और हादि विद्याओं में भी यहाँ पर कादि विद्या का ही प्रथमतः उद्धार होने से उसकी प्रधानता प्रकट होती है, इस तथ्य को भी आचार्य प्रकट करते हैं—**अनयोरपि मध्ये।** इस तथ्य को ब्रह्माण्डपुराण से

भी स्थूणानिखननन्याय से दृढ़ करते हैं—**अतएव 'श्रीविद्यैव तु मन्त्राणां तत्र कादिर्यथा परा' इति ब्रह्माण्डपुराणे उपबृंहितम्।** देवादि उपासकों से आराधित होने से सारी विद्याओं में यत्किञ्चित् भेद का दर्शन होने पर भी उनमें तारतम्य का दर्शन अनुचित है, इस वस्तु को हृदय में रखकर न्यायलब्ध रहस्य प्रकट करते हैं—**वस्तुतः सर्वासाम्।** यथार्थ दृष्टि से देखा जाय तो सारी विद्याओं में अभेद है तथापि मन्त्रों में जो तारतम्य दिखायी देता है वह केवल प्रशंसा के लिए अर्थवाद मात्र है जिसका प्रयोजन साधकों के रुचिसंवर्धन के लिए है। आचार्य ने स्वयम् इसका समर्थन योगिनीहृदय की अपनी सेतुबन्धनामक व्याख्या में किया है। इस अर्थ को पुष्ट करने के लिए उपोद्वलक हेतु प्रस्तुत करते हैं—**अतएव।** इसीलिए आद्य शङ्कराचार्य श्रीभगवत्पाद ने कादि और हादि विद्याओं का उद्धार सौन्दर्यलहरी ग्रन्थ में विपरीत क्रम से किया है। पहले कादिविद्या का उद्धार न करके हादिविद्या का उद्धार किया है, यह अभिप्राय है। दोनों विद्याओं का उद्धार इन दो श्लोकों से किया गया है—

**'शिवः शक्तिः कामः क्षितिरथ रविःशीतकिरणः**
**स्मरो हंसः शक्रस्तदनु च परामारहरयः।**
**अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटितो**
**भजन्ते वर्णास्ते तव जननि! नामावयवताम् ।।**

**स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ तव मनो-**
**र्निधायैके नित्ये निरवधिमहाभोगरसिकाः ।**
**भजन्ति त्वां चिन्तामणिगुणनिबद्धाक्षवलयाः**
**शिवाग्नौ जुहवन्तः सुरभिघृतधाराहुतिशतैः ।।'**

यहाँ शिव, शक्ति, काम और क्षिति पदों से ह स क ल तथा रवि, शीतकिरण (चन्द्र), स्मर, हंस और शक्र पदों से ह स क ह ल तथा परा, मार और हरि पदों से स क ल वर्णों का ग्रहण है। इनके अन्त में हृल्लेखा (मायाबीज) जोड़ देने पर हादिविद्या का उद्धार हो जाता है। ये सभी वर्ण भगवती के अवयव हैं। इससे उनका मन्त्रात्मक शरीर निष्पन्न होता है। उक्त विद्या के आदि में क ए ई (स्मर, योनि, लक्ष्मी) जोड़ देने से कादि विद्या की निष्पत्ति हो जाती है। भोगरसिक भगवती के इस रूप का भी सेवन करते हैं। सौन्दर्यलहरी की लक्ष्मीधरा व्याख्या का निराकरण करते हैं— **तत्रापि प्रकृतश्रुत्यानुगुण्याय।** पूर्वोक्त दोनों मन्त्रों की अनुकूलता को देखते हुए 'शिव, शक्ति और काम' पदों का कुछ लोग जो अन्यथा व्याख्यान करते हैं वह क्लिष्ट कल्पना और निरर्थक है, इसलिए अनादरणीय है। लक्ष्मीधरा टीका में शिव, शक्ति और काम पदों से ककार, एकार और ईकार को कहा गया है जो विपरीत है। भाषानुवादकर्ता ने भी इस पर ध्यान नहीं दिया है। दूसरे श्लोक में भी स्मर, योनि और लक्ष्मी पदों का कामराज, भुवनेश्वरी बीज और श्रीबीज के रूप में व्याख्यान विपरीत है।

मन्त्रात्मक देवता का जप प्राकरणिक याग का अङ्ग है, इस अर्थ को न्यायतः प्रस्तुत करते हैं—**अत्रान्तर्यागस्यैव प्रकरणित्वेन तदीयद्रव्यानुवादेन गुणान्तरसमुच्चयस्य द्वादश्यामृचि विधास्यमानत्वेन प्रकरणानुवृत्तेर्वक्तव्यतया तन्मध्यपतितस्य जपस्य प्रकरण्यन्तर्यागाङ्गत्वात् 'अमृतं भजन्त' इत्यपाप-श्लोकश्रवणवदर्थवादः।** प्रकरणमस्त्यस्य स प्रकरणी अन्तर्यागः। इस उपनिषद् में अन्तर्याग का ही प्रकरण है अतः वही प्रकरणी कहा जायेगा। एवञ्च, याग का जो फल है वही वास्तविक फल माना जायेगा। ऐसे स्थलों पर अङ्गों का फलकथन उनकी स्तुति के लिए अर्थवाद (रुचि पैदा करने के लिए प्रशंसापरक वाक्य) के रूप में मान्य होता है। यहाँ पर 'तुष्टुवांसः' पद से प्रतिपादित होने वाला जप प्रकरणी अन्तर्याग का ही अङ्ग है, अतः 'अमृतं भजन्ते' से किया जाने वाला फलकथन अर्थवाद मात्र है। कैसे? वैसे ही जैसे—**यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति**' में जुहू (हवनपात्र) के लिए विहित पर्णता (पलाश-काष्ठ) का अपापश्लोक = श्रवणरूप फल का कथन अर्थवाद माना गया है। पापश्लोकअपकीर्ति। पर्णता क्रत्वर्थ है, अतः क्रतूपकाररूप फल से अतिरिक्त उसका फल नहीं होगा, यह अभिप्राय है। जहाँ श्रुति से अङ्गों के फलसम्बन्ध का भी विधान है वहाँ उनका पृथक् फल भी माना जाता है। जैसे **'गोदोहनेन पशुकामस्य प्रणयेत्'** में पशु फल के लिए विहित जल के प्रणयन का साधन गोदोहन (दोहनी) प्रकरणी दर्शपूर्णमास याग से अतिरिक्त फल की कामना होने पर विहित है। जप प्रकरणी अन्तर्याग का ही अङ्ग है, इसे सिद्ध करने के लिए हेतु के रूप में अवान्तर प्रकरण को **'अत्रान्तर्यागस्यैव प्रकरणित्वेन'** अंश से कहा है। अन्तर्याग ही प्रकरणी है, अतः अन्तर्यागीय द्रव्य का अनुवाद करके बारहवीं ऋक् में अन्य गुणों (अङ्गों) के समुच्चय का विधान होने से प्रकरण का विच्छेद नहीं होगा, फलतः अन्तर्यागीय दोनों गुणों के मध्य में विहित जप प्रकरणी अन्तर्याग का ही अङ्ग होगा। अत एव जप का फलकथन अर्थवाद होगा। मन्त्र में अर्थवादत्व की असंभावना का निराकरण करते हैं—**मन्त्रत्वेऽपि विधित्वस्येवार्थवादत्वस्यापि स्वीकारे बाधकाभावात्।** 'वसन्ताय कपिञ्जलानालभेत' में जैसे मन्त्रत्व के होने पर भी विधित्व स्वीकार किया गया है वैसे ही यहाँ मन्त्र में भी अर्थवादत्व मान लेने में कोई बाधा नहीं है। प्रथम मन्त्र में अर्थवाद का लक्षण (विधिशेषत्व) होने पर भी उसके अभाव को कहते हैं—**'तिस्रःपुरः' इत्यादिः।** प्रथम मन्त्र अन्तर्यागविधि का शेष (भाग) है, फिर भी उसमें अर्थवादत्व स्वीकार नहीं किया जायेगा। क्यों? **विधिशेषत्वस्यार्थवादव्याप्यत्वे मानाभावात्।** जहाँ जहाँ विधिशेषत्व रहे वहाँ वहाँ अर्थवादत्व भी रहे, इसमें कोई प्रमाण नहीं है। वेदान्तमत को स्वीकार करके मन्त्र के स्वार्थ में प्रामाण्य को कहते हैं—**अर्थवादत्वेऽपि वा।** अर्थवादत्व मान लेने पर भी भूतार्थवाद होने से मुख्य अर्थ में प्रामाण्य माना जायेगा। बारहवीं ऋक् में बहिर्याग के विधान की आशङ्का करते हैं— **न च द्वादश्यामृचि। 'परिस्रुतं झषमाद्यं पलञ्च'**, इस बारहवें मन्त्र में अन्तर्याग से भिन्न बहिर्यागरूप स्थूल उपासना का विधान है, ऐसी आशङ्का नहीं करनी चाहिये। मद्य, मत्स्य, मांस आदि द्रव्यों से याग का विधान भासित होने से उक्त

आशङ्का को बल मिलता है। आशङ्का को यथार्थ मानकर अन्तर्यागीय प्रकरण से सम्बन्ध की दुर्वारता को समाधानार्थ प्रस्तुत करते हैं—**तथापि पञ्चदश्यामृचि**। बारहवें मन्त्र में बहिर्याग की प्रतीति होने पर भी वहाँ अन्तर्याग के प्रकरण का अनुवर्तन मानना ही पड़ेगा, क्योंकि पन्द्रहवें मन्त्र में 'मद' धातु के अर्थ को प्रस्तुत करके उपसंहार किया गया है। उपक्रम और उपसंहार के ऐक्य के कारण इस उपनिषद् में अन्तर्याग के प्रकरण का अनुमान होता है, यह अभिप्राय है। स्वाभिमत प्रकट करते हैं—**वस्तुत उपास्तित्रयस्य समप्राधान्यमेव**। तीनों उपासनाओं की तुल्य प्रधानता ही यथार्थ पक्ष है। इसमें हेतु कहते हैं—**विधित्रयेऽपि**। तीनों उपासनाओं की विधियों में फल का सम्बन्ध विद्यमान है, अतः तीनों में से किसी एक को प्रकरणी (प्रधान) मानने में कोई दृढतम युक्ति नहीं है। सदृष्टान्त निगमन करते हैं—**आग्नेयादिषट्कस्येव मिलितानामेव च फलजनकत्वम्**। वेद में अमावास्या और पूर्णिमा दोनों पर्वों में क्रमशः आग्नेय, ऐन्द्रदधि, ऐन्द्रपय और आग्नेय, उपांशुयाज, अग्नीषोमीय पुरोडाश, इन छः यागों को विधान है। अमावास्या और पूर्णिमा काल का संयोग होने से पूर्व त्रिक को अमावास्या याग और उत्तर त्रिक को पौणमासी याग कहते हैं। तीन-तीन के समुदायों के अनुवादक ये दो अलग-अलग वाक्य हैं—**य एवं विद्वानमावास्यां यजते, य एवं विद्वान् पूर्णमासीं यजते**। तीन, तीन यागों के साहित्य का विधान **'अमावास्यायाममावास्यया यजेत, पौर्णमास्यां पौणमास्या यजेत'**, इन दो वाक्यों से है। 'अमावास्या' का पर्याय 'दर्श' शब्द है तथा पौर्णमासी का ही एक भाग 'पूर्णमास' शब्द है। 'नामैकदेशे नामग्रहणम्', इस न्याय से पौर्णमासी का पर्याय 'पूर्णमास' शब्द निश्चित होता है। तथा च, दर्श और पूर्णमास शब्दों से तीन-तीन यागों को लेकर छः यागों का स्वर्ग फल के साथ सम्बन्ध का विधान **'दर्शपूर्णमासाभ्यां स्वर्गकामों यजेत'**, यह वाक्य करता है। एवञ्च, छः यागों का ही स्वर्ग फल के साथ सम्बन्ध सिद्ध होता है और प्रयाजादि की अङ्गता सिद्ध होती है। 'दर्श और पूर्णमास' शब्द अमावास्या और पौर्णमासी के पर्याय हैं, इसका निर्देश वेद भी करता है। तथा हि— अन्वारम्भणीया के वाक्यशेष में इस तरह कहा गया है—

**''दर्शो वा एतयोःपूर्वः पूर्णमास उत्तरोऽथ यत् पूर्णमासं पूर्वमारभते तदयथापूर्वं क्रियते। तस्मात् पूर्वं पूर्णमासमारभमाणः सरस्वत्यै चरुं निर्वपेत् सरस्वते द्वादशकपालममावास्या वै सरस्वती पूर्णमासः सरस्वान्।''**

उक्त इस दृष्टान्त से तीनों उपासनायें मिलकर ही फल को उत्पन्न करती हैं। जैसा कि वचन है—

**'अन्तर्यागबहिर्यागौ गृहस्थः सर्वदा चरेत्।**
**चक्रराजार्चनं विद्याजपो नाम्नाञ्च कीर्तनम्।।**
**भक्तस्य कृत्यमेतावदन्यदभ्युदयं विदुः।।'**

गृहस्थ अन्तर्याग और बहिर्याग दोनों का सदा अनुष्ठान करें। चक्रराज की पूजा,

श्रीविद्या का जप और नामों (सहस्र) का कीर्तन, ये तीन ही भक्तों के कार्य हैं। केवल अन्तर्याग का अनुष्ठान और केवल विद्याजप का अनुष्ठान फल का जनक होने से पुरुषार्थ (धर्म) के रूप में भी पृथक् वचनों के बल से स्वीकृत हैं, इस तथ्य को प्रकट करते हैं—**अधिकारिविशेषेण**। विशिष्ट अधिकारियों को लेकर उक्त व्यवस्था मान्य है। इसमें दृष्टान्त के रूप में मीमांसा का न्याय प्रस्तुत करते हैं—**असोमयाजिनः**।

**अयम्भावः—**

**'आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवति'**, इस वाक्य से यह कहा गया है कि ब्राह्मण अग्नि देवता से सम्बन्ध समान जनन के कारण रखता है, अतः सोमयाग करने के बाद अग्नीषोम होता है। सोमयाग के विना उसका अग्नीषोमीयपुरोडाश याग में अधिकार नहीं है। सोमयाग करने के बाद ही यजमान अग्नीषोमीयपुरोडाशयाग कर सकता है। एवञ्च, असोमयाजी यजमान दर्शपूर्णमासयाग में अग्नीषोमीय-पुरोडाशयाग न करने पर भी जैसे फल प्राप्त करता है वैसे ही अन्तर्याग और जप का पृथक् अनुष्ठान करने पर भी वचनविशेष के कारण साधक को फल प्राप्त होता है॥९॥

## श्रीत्रिपुरोपनिषद्

**पुरं महःत्रिमुखं विश्वमातुर्नवरेखास्वरमध्यं तदैष्ट।**
**बृहत्तिथीर्दशपञ्चादिनित्या सषोडशी पुरमुख्यं बिभर्ति ॥१०॥**

**श्रीरामानन्दतीर्थकृतभाष्यम्—**

षोडशनित्यानां स्वरूपं कथयति 'पुरं महरित्यादिना—

पुरं स्थानम्। तत् कीदृग्भूतम्? महदव्यक्ताहङ्कारात्मककामेश्वरी-वज्रेश्वरी भगमालिंन्यात्मकमित्यर्थः। अत एव त्रिमुखं त्रिकोणरूपम्। कस्याः पुर इत्यत आह—**'विश्वमातुरि'**ति। विश्वस्य चराचरात्मकस्य लोकस्य मातुः जनयित्र्याः। **'नमस्ते भगवति! मातरस्मान् पाहि सर्वत'** इति श्रुतेः। तथा च हयग्रीवः—**'अथ सा जगतां माता ललिता परमेश्वरी'**ति। यत्तदोर्नित्यसम्बन्धात् तच्छब्दो यच्छब्दमपेक्षत इति न्यायेन यच्छब्दोऽध्याहर्तव्यः। विश्वमातुर्महः त्रिमुखं यत्पुरं कर्त्री अवेः आदित्यस्य अव् रक्षण इति धातोः औणादिक इङ् प्रत्ययः। सूर्यो नो दिवस्पातु पूर्वी रक्षत्वंहसः' इत्यादि श्रुतिभ्यः। 'त्वमवोदधेवेतुर्वशाशोति साक्षादाम्नायाच्च अविः सूर्यः। तथा च निघण्टुः 'अवयः शैलमेषार्का आज्ञाऽऽह्वनाऽध्वराहवाः' इति। रवेरादित्यस्य द्वादशात्मन इति भावः। तस्य द्वादशात्मत्वम् 'अष्टौ वसवः, एकादशरुद्राः, द्वादशादित्याः' इति, 'पञ्चपादं पितरं द्वादशाकृतिमि'ति बहुषु स्थलेषु श्रूयते। केन पुनः तत्सङ्ख्या लक्ष्यन्ते?

द्वादशरेखा ऋजुरूपा इति भावः। ऐष्ट ऐच्छत, अलभतेत्यर्थः। 'विश्वमातुर्यन्महत्त्रिमुखं पुरम् अवेः रेखा ऐष्टे'ति पद-योजना। द्वादशरेखाप्राप्तं प्रयोजनमाह—स्वरमध्यमिति। स्वरसंख्याकं मध्यं यस्य तत् स्वरमध्यम्। त्रिकोणचक्रं द्वादशरेखासहितं चेत् षोडशत्रिकोणं भवतीत्यर्थः। तथा च श्रुतिः—'द्वादश प्रथमंचक्रमेकं द्वादशारं निहितं जराये'ति। पुनः कीदृशम्? बृहत् स्वांशैः श्रीचक्रगरं बृहयतीति बृहत्। बृहतीं बृंहयति। पुनः कीदृशः? सषोडशीकं षोडशी महात्रिपुरसुन्दरी, तया सहितम्। एवम्भूतं तत् पूर्वोक्तं पुरं मध्यं त्रिकोणं कर्तृ। तिथिरित्यर्थः। विभक्तिव्यत्ययश्छान्दसः। 'कति ता' इत्यत आह—दश पञ्चदशेत्यर्थः। दर्शादिपूर्णिमान्ताः आदिनित्याः।

अथवा स्वरमध्यं बृहत् तत् त्रिकोणचक्रं तिथिः। दशपञ्चादिनित्या सषोडशीकं पुरमध्यं च बिभर्तीत्यर्थः। अस्मिन् पक्षे पुरमध्यशब्देन षोडशत्रिकोणमध्यात्मत्रिकोणमुच्यते। नित्याषोडशिकार्णवे त्रिकोणचक्रे षोडशशक्तिकोणाधार इत्यर्थः।

तद्यथा—

'श्रीचक्रमध्यत्र्यस्त्रान्तस्तिर्यग्रेखात्रयं लिखेत् ।
आरभ्य कोणे रेखान्ते तृतीयस्यां तथा पुनः ।।

त्रिकोणस्य हि रेखान्तं तस्या एव तु पार्श्वयोः ।
तुरीयांशावशिष्टं तु व्यत्यासाद्धि लिखेत् स्वयम् ।।

रेखाद्वयं तदन्तौ तु प्रथमास्त्रयोस्तु योजयेत् ।
मध्यमायास्तु रेखायाः कोणयोर्युगलं पुनः ।
त्रिकोणस्याऽऽद्यरेखायां मध्यभागेन योजयेत् ।
एवं विलिखितं चक्रं भवेत् षोडशकोष्ठकम् ।।' इति।

ललितोपाख्याने च—

'अथ नाथान्तरालस्योपरिष्टाद्धिष्ण्यमुत्तमम् ।
हस्तविंशतिमुन्नम्रं चतुर्नल्वप्रविस्तरम् ।।

नित्यान्तरमिति प्रोक्तं नित्याः पञ्चदशाश्च वै ।
अथ कामेश्वरी नित्या नित्या च भगमालिनी ।।

नित्यक्लिन्नापि च तथा भेरुण्डा वह्निवासिनी ।
महावज्रेश्वरी दूती त्वरिता कुलसुन्दरी ।।

नित्या नीलपताका च विजया सर्वमङ्गला ।
ज्वालामालिनिका चित्रेत्यन्ताः पञ्चदशोदिताः ।।

एता देवीस्वरूपाः स्युर्महाबलपराक्रमाः ।
प्रथमा मुख्यतिथितां गता व्याप्तजगत्त्रयाः ।।

कालरूपा वर्तमानाः कालग्रासविचक्षणाः ।
ब्रह्मादीनामशेषाणां चिरकालमुपेयुषाम् ।।

तत्तत्कालशतायुष्यरूपा देवाज्ञया स्थिताः ।
नित्योद्यता निरातङ्का श्रीदेव्यङ्गस्य रक्षकाः ।।

सेव्यन्ते ( जगतर्मूर्द्धे )ललितां स्वैक्यरूपिणीम् ।
तासां भवनतां प्राप्ता दीप्ताः पञ्चदशस्वराः ।।

विसृष्टिबिन्दुचक्रे तु षोडश्या भवनं मतम् ।।' इति।

एतासां षोडशनित्यानां ध्यानं शारदातिलके कथितं लिख्यतेऽत्र। यथा—

'प्रत्यूषोन्मीलदर्कप्रसृमरसुषमाधौरणीयावकाशां
पाशं चापं च पौण्ड्रं प्रसवशरसृणीः पाणिपद्मैर्वहन्तीम् ।
कस्तूरीक्लृप्तवक्षोरुहकलशलुठत्तारहाराभिरामां
कामेशाङ्काधिरूढां कलयति ललितामत्यखण्डस्वरूपाम् ।।१।।

सिन्दूरापाटलाङ्गीं चिकुरभरलसत्तारकाधीशरेखां
पाणौ पाशं च बाणं सृणिमपि च वरं पानपात्रं वरान्नम् ।
हस्ताम्भोजैर्दधानामरुणनिवसनामङ्कुरन्मन्दहासां
वन्दे कामेश्वरीं तां निखिलसुरनुतां नित्यमेकादशार्णाम् ।।२।।

फुल्लद्बन्धूकपुष्पद्युतिभरकिरणां पूर्णचन्द्राऽऽभवक्त्रां
कह्लाराऽम्भोजपाशाऽङ्कुशकुसुमशरेष्वासकाण्डान् वहन्तीम् ।
पाटीरालिप्तगात्रीं प्रसृमरकरुणां पल्लवाभाधरौष्ठीं
पञ्चत्रिंशच्छतार्णां भवभयशमनीं भावयामस्तृतीयाम् ।।३।।

शम्पासच्छायकायां शरदुडुपमुखीं चम्पकामोदिकेशां
बिभ्राणां हस्तपद्मैरभयमपि सृणिं पानपात्रं च पाशम् ।
आताम्राम्भोजपीठामतनुकुचभरद्वन्द्वताम्यद्वलग्नां
नित्यामेकादशार्णां निगमशतनुतामाश्रयामश्चतुर्थीम् ।।४।।

सन्तप्तस्वर्णगौरीं सरसिजनयनां चन्द्ररेखावतंसां
खड्गं खेटं कृपाणं सृणिमपि विशिखं पाशमग्निं गदां च ।
बिभ्राणां हस्तपद्मैः पृथुलकुचभरां भालमध्यार्पिताक्षीं
भेरुण्डां दाता ( ? ) तां नवार्णां सकलमपि विषं नाशयन्तीं प्रपद्ये ।।५।।

दीवी ( ? ) मापिञ्जराङ्गीं दिनपतिरजनीनाथवैश्वानराक्षीं
रक्ताब्जं हेमश्रृङ्गं रुचकमपि शरं खण्डशीतांशुबिम्बम् ।
कह्लारं पुण्ड्रचापं करसरसिरुहैर्बिभ्रतीं चारुवेषां
षष्ठीं तामाश्रयामः सकलजनमनस्तापहन्त्रीं नवार्णाम् ।।६।।

आरक्ताभां त्रिनेत्रामसितकचभरां बिभ्रतीं हस्तपद्मैः
कोदण्डं मातुलुङ्गं कनकमयसृणिं रत्नपाशं चतुर्भिः ।
तादृग्दोर्मूलकूलङ्कषकुचशिखरां ताम्रपद्माधिरूढां
सर्वालङ्कारदीप्तां कलयति सततं सप्तमीं द्वादशार्णाम् ।।७।।

कल्पान्तक्रूरसूर्यप्रतिभटकिरणां कम्बुकण्ठीं सुनासां
खेटं पाशं कुठारं चषकमपि सृणिं पुण्डरीकं गदां च ।
खड्गं हस्तैर्दधानां कठिनकुचभरां कञ्जसञ्जातनेत्रां
सप्तार्णामष्टमीं तां सकलरिपुजनध्वंसिनीं भावयामि ।।८।।

गुञ्जादामाभिरामस्तनकलशभरां कुन्तलोद्भासिबर्हां
तापिच्छच्छायकान्तामरुणकिसलयश्रेणिजित्क्लृप्तकेशाम् ।
पाशाऽभीतिं वराब्जाङ्कुशमपि दधतीं पक्वबिम्बाधरौष्ठीं
वन्दे तां द्वादशार्णां वनतरुकुसुमैर्भूषितामादिभिल्लीम् ।।९।।

व्याख्यां मुद्राक्षमालां चषकलुठमणीं कुण्डिकां केसरस्त्रक्-
पाथोजातं सुरक्तोत्पलवरसुमहालेखिनीं श्रृङ्खलां च ।
हस्तैर्नित्यं वहन्तीं हरिणधरकलागुम्फितश्यामकेशाम्
आरक्तां त्र्यक्षरान्तां कलयति दशमीमब्जदायादवक्त्राम् ।।१०।।

पाशाक्षस्त्रक्त्रिशूलप्रसवशरवराऽभीतिखेटासिवल्लीं
पुस्तं चर्म कपालं सृणिमपि दधतीं पूषबिम्बारुणाङ्गीम् ।
षड्वक्त्रां चन्द्रखण्डस्फुरितकचभरां चारुमाणिक्यभूषां
नित्यं नित्यामुपासे निटिततटलसल्लोचनां त्र्यक्षरान्ताम् ।।११।।'

एवं चन्द्रकलां षोडशनित्यास्वरूपां षोडशनित्यास्वरूपस्वरभवनगतां प्रतिपाद्य प्रकाशानन्दसारां बिन्दुत्रयसमष्टिभूतविद्याक्षरस्वरूपिणीं कामकलामहात्रिपुरसुन्दरीं मातृकां ध्यायन् सर्वसम्मोहजनको भवतीति कथयति—

'पद्मस्थां पञ्चवक्त्रां फलकसृणिवराभीतिकोदण्डपाशां
शक्तिं शार्ङ्गं पतङ्गं वरमपि दधतीं शोणचेलावृताङ्गीम् ।

शाणोल्लीढेन्द्रनीलोत्पलदलकलिकाश्लाघनीयाङ्गशोभां
देवीं सप्तद्विपञ्चाक्षरपरिपठितां द्वादशीं शीलयामः ।।१२।।
शङ्खं चक्रं कृपाणं सृणिमपि विशिखं खेटकं मातुलुङ्गं
कह्लारं चापकाण्डं करतलकमलैर्हेमपाशं वहन्तीम् ।
पञ्चास्यां पाटलाङ्गीं प्रसृमरकरुणापूरपूर्णां त्रिनेत्रां
एकार्णां तां जयाख्यां हिमकरविकसच्चूलिकामाश्रयामः ।।१३।।

भूषानिक्षिप्तहेमद्युतिसमकिरणां मुग्धचन्द्रावतंसां
बिभ्राणां दक्षिणेनाऽरुणलिकुचफलं पाणिपङ्केरुहेण ।
हस्तेनाऽदक्षिणेन प्रणतजनकुलेष्वर्थजातं किरन्तीं
वन्दे तामेकवर्णां बलरिपुविनुतां मङ्गलां सर्वपूर्वाम् ।।१४।।

ज्वालामालाकरालानलकिरणनिभां चापखेटाऽसिबाणान्
पाशं शूलं च खड्गं परिघवरसृणीन् वह्न्यभीतिं दधानाम् ।
षट्कक्षां त्र्यष्टषष्ट्यर्णकमनुविदितां चन्द्रखण्डावतंसां
ज्वालामालिन्यभिख्यां भजत भगवतीं भक्तरक्षाधुरीणाम् ।।१५।।

प्रत्यग्रस्मेररूपप्रसवरुचिसमां पद्मपत्रायताक्षीं
बिम्बौष्ठीं पीनवक्षोरुहतटरुचिरां पीतकौशेयचेलाम् ।
बिभ्राणां हेमपाशाऽभयवरदसृणीन् बिन्दुनादस्वरूपां
चित्रां चित्ते भजामः शिथिलितविमलामक्षरद्वन्द्ववेद्याम् ।।१६।।

एता नित्याः समस्ताः सकलजनसमाकर्षणे शोणवर्णाः
कालिन्दीकालमेघाञ्जनगिरिकिरणोद्वेषणोच्चाटनेषु ।
विद्यावाप्तौ च मोक्षे विदलितकुमुदेन्दूत्पलच्छायकायाः
काश्मीरस्वर्णवर्णद्युतिकपिशरुचः स्तम्भने चिन्तनीयाः ।।१७।।

वेतालव्याधिदावानलसलिलमरुद्घोरकान्तारमध्य-
क्रूरापस्मारचौरप्रचुरविषधरस्फोटसम्पीडनेषु ।
क्रुद्धे भूपालवर्गे कुवलयनयनाकर्षणे दुर्निमित्ते
नित्यानां देवतानां नियतमहरहः कीर्तयेत् स्तोत्रमेतत् ।।१८।।' इति।

**श्रीभास्कररायप्रणीतभाष्यम्—**

अथ स्थूलोपास्तिविधित्सया मूलदेवताया अन्तस्थमुणत्वेन चिन्तिताया बहिश्चक्रे स्थापनाय स्थूलविशेषं निर्देष्टुं दशमीमृचमाह—त्रिविष्टपमिति।

रेखापदोत्तरं षोडशस्य विसर्गस्वरस्य प्रश्लेषः । नवरेखासु नवयोनिघटितासु

'अः' इति स्वरस्थानीयो मध्योऽस्य तत्। यद्वा नवसङ्ख्या रेखा यस्य तन्नवरेखं संहारचक्रं तस्य अः स्वरोपलक्षितं स्थानं मध्यं यस्य तत्। अ इत्यकार एव स्वरो यस्मिंस्तद् अःस्वरमिति वा विग्रहः। तादृशं त्रिमुखं त्रिकोणं मध्यत्रिकोणमिति यावत्। तद् विश्वमातुस्त्रिपुरसुन्दर्याः त्रिविष्टपं निवासस्थानं पूजास्थानमिति यावत्। स्वर्गस्य देवतावासभूतत्वेन वाचकपदेनात्र स्थाननिर्देशः। तदी के इति स्तोतुर्वाक्यम्। 'द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते सडकारो ळ कारः' इति प्रतिशाख्यविधितो डकारस्य ळ कारः सञ्जातः। इयमेवोपनिषदाथर्वणिकैरपि पठ्यते। तत्पक्षे न दुःस्पृष्टादेश इति व्यवस्था। अःस्वरस्य मध्यमत्वोक्त्यैवेतरेषां पञ्चदशस्वराणां रेखात्रये बिन्दुमभितः 'समं स्याद्' इति न्यायेन पञ्च पञ्चधा विभज्यावस्थानं ध्वनितम्। तत् त्रिकोणं बृहद् विभावितं सद्दशपञ्चतिथीः दशपञ्चतिथिदेवताकाः नित्याः कामेश्वर्या-दिचित्रान्ता बिभर्ति दक्षिणोद्ध्वोत्तररेखासु पञ्च पञ्चनित्याः पूजनीया इति भावः। तदुपबृहितं ज्ञानार्णवे—

**'विभाव्य च महत्यस्त्रमग्रदक्षोत्तरक्रमात्।**
**रेखासु विलिखेत् पश्चात् पञ्च पञ्च क्रमेण च॥**
**अकाराद्यानुकारान्तान् दक्षिणायां विचिन्तयेत्।**
**ततश्च पूर्वरेखायां दीर्घसर्गादिपञ्चकम्॥**
**विलिख्योत्तररेखायां शक्त्यादि विलिखेत्ततः।**
**अनुस्वारान्तं मध्ये च विसर्गे षोडशीं यजेत्॥'** इति।

चन्द्रस्य कला वृद्धिक्षयशालिन्यः पञ्चदश, ता एव हि तिथयः 'दर्शाद्याः पूर्णिमान्ताश्च कलाः पञ्चदशैव तु' इत्यादिना तन्त्रे निर्दिष्टाः। 'दर्शे दृष्टा दर्शता' (तै.ब्रा. ३.१०.१) इत्यादिना तैत्तिरीयैराम्नाताश्च। एतासां कारणभूता वृद्धिक्षयशून्या सदाख्या षोडशी कला। सा च पञ्चदशानां नित्यानां कादाणत्वारदिनित्योच्यते। सा पूर्ववर्णिता त्रिपुरसुन्दरी आदित्यरूपा सती पुरस्य श्रीचक्रस्य मध्यं विसर्गस्वरस्थानं बिभर्ति अध्यास्ते प्रकाशविमर्शरूपाकारहकारव्यञ्जकत्बात् षोडशस्वरस्य तदात्मकताया युक्तत्वादिति द्रष्टव्यम्॥१०॥

## भाषाव्याख्या

स्थूलोपासना का विधान करने के लिए अन्तस्थ गुण के रूप में ध्यात होने वाली मूलदेवता की बहिश्चक्र में स्थापना करने के लिए स्थूलविशेष को निर्दिष्ट करने के लिए.

दसवीं ऋक् को प्रस्तुत करते हैं—**त्रिविष्टपं त्रिमुखम्।** विश्वमाता अर्थात् जगज्जननी पराम्बा का मध्यत्रिकोणरूप जो निवासस्थान अर्थात् पूजा का स्थान है वह विसर्ग स्वर (अः) मध्य वाली नौ रेखाओं में घटित (निर्मित) है। इसकी मैं स्तुति करता हूँ, यह स्तावक का वाक्य है।

वह त्रिमुख अर्थात् त्रिकोण अपने अंशों से श्रीचक्रनगर का बृंहण करने से बृहत् है। वह विशेषतः भावित होकर पन्द्रह तिथिदेवताओं को धारण करता है। अभिप्राय प्रकट करते हैं—**दक्षिणोर्ध्वोत्तररेखासु पञ्च पञ्च नित्याःपूजनीया इति भावः।** त्रिकोण के दक्षिण, ऊर्ध्व और उत्तर रेखाओं में पाँच-पाँच नित्या देवियों का पूजन करना चाहिये। इसका उपबृंहण ज्ञानार्णव में किया गया हैं—'अग्र, दक्षिण और उत्तर के क्रम से त्रिकोण की भावना करके रेखाओं में क्रमशः पाँच-पाँच वर्णों का विन्यास करना चाहिये। अकार से उकार तक पाँच वर्णों का दक्षिण रेखा में चिन्तन करना चाहिये। इसी तरह पूर्वरेखा में दीर्घ ऊकार से लेकर दीर्घ ॡकार का और उत्तर रेखा में ए, ऐ, ओ, औ और अनुस्वार का तथा मध्य में विद्यमान विसर्ग में षोडशी का यजन करना चाहिये।''

मन्त्र में विद्यमान 'रेखा' पद के बाद सोलहवें विसर्ग स्वर का प्रश्लेष करने पर **'नवरेखाःस्वरमध्यम्'** पद त्रिकोण का विशेषण हो जाता है। इसका विग्रह तीन प्रकार से आचार्य ने किया है—**नवरेखासु नवयोनिघटितासु 'अः' इति स्वरस्थानीयो मध्यो यस्य तत्।** अर्थात् नौ योनियों में रचित नौ रेखाओं में 'अः', यह विसर्ग स्वर के स्थान में विद्यमान जिस त्रिकोण का मध्य हो वह 'नवरेखाःस्वरमध्य' त्रिकोण है। **'नवसंख्या रेखा यस्य तन्नवरेखं संहारचक्रं तस्य अःस्वरोपलक्षितं स्थानं मध्यं यस्य तत्'**, यह दूसरा विग्रह है। अर्थात् नौ रेखाओं वाले संहारचक्र का मध्य 'अः' स्वर से उपलक्षित हो जिसका वह। **'अः इत्याकार एव स्वरो यस्मिंस्तत्'**, यह तीसरा विग्रह है। 'अः' आकार वाला स्वर जिसमें हो वह 'अःस्वर' कहा जायेगा। इस 'अः' स्वर को मध्यम के रूप में कहा गया है, अतः शेष 'अ' से लेकर अनुस्वारपर्यन्त पन्द्रह स्वरों का तीन रेखाओं में बिन्दु के चारों ओर पाँच-पाँच के रूप में विभाग करके उनकी स्थिति ध्वनित होती है। इसको पूर्व ही ज्ञानार्णवीय श्लोक के तात्पर्य में प्रस्तुत कर दिया गया है।

सप्रमाण वाक्यार्थ प्रस्तुत करते हैं—**चन्द्रस्य कला वृद्धिक्षयशालिन्यः पञ्चदश, ता एव तिथयः 'दर्शाद्याः पूर्णिमान्ताश्च कलाः पञ्चदशैव तु' इत्यादिना तन्त्रे निर्दिष्टाः।** वृद्धि और क्षय से युक्त पन्द्रह चन्द्रकलाओं का पन्द्रह तिथियों के रूप में तन्त्र में निर्देश है। तैत्तिरीयशाखा में भी 'दर्शे दृष्टा दर्शता' के रूप में इनका उपदेश है। इन तिथियों की कारणभूत सोलहवीं कला का नाम 'साद' है जिसमें वृद्धि और क्षय का अभाव है। यह षोडशी कला पन्द्रह नित्याओं का कारण है, अतः इसे 'आदिनित्या' कहा जाता है। वह पूर्वोक्त त्रिपुरसुन्दरी आदित्यस्वरूपिणी होकर श्रीचक्र के मध्य में विसर्गस्वरीय स्थान में रहती है। इसके औचित्य को प्रकट करते हैं—**प्रकाशविमर्शरूप।** प्रकाश अर्थात् परमशिव के विमर्शरूप 'हकार' का व्यञ्जक होने के कारण सोलहवाँ स्वर (विसर्ग) देवी का स्वरूप है।।१०।।

# श्रीत्रिपुरोपनिषद्

**द्वा मण्डला द्वा स्तना बिम्बमेकं मुखं चाऽथ त्रीणि गुहा सदनानि ।**
**कामीं कलां काम्यरूपां चिकित्वा नरो जायते कामरूपश्च काम्यः ।।११।**

**श्रीरामानन्दतीर्थकृतभाष्यम्—**

द्वा मण्डला द्वौ मण्डलौ, ईकारोभयपार्श्वस्थितौ शशिहुताशनरूपौ मण्डलरूपौ बिन्दू इत्यर्थः। तौ द्वा स्तना बिम्बा द्वे स्तनबिम्बे, व्यत्ययो बहुलमित्यादिना साधुः। एकम् ईकारोद्ध्र्वगतं सूर्यात्मकं बिन्दुमित्यर्थः। तन्मुखं वक्त्रम्। 'च' शब्दश्चिकित्वेति पदं समुच्चिनोति। अथ तदनन्तरम्। त्रीणि एवमुक्तानि सोमसूर्याग्निस्वरूपाणि मण्डलानि गुहा सदनानि...... पश्चात् कामी कामः शिवः, तस्य स्त्री कामीति, 'पुंयोगादाख्यायामि'ति ङीष्। तां कलां वर्णमयीं कामकलाऽक्षरशक्तिकामिति यावत्। काम इव ककाराकारमकारादिवर्णरूपाम्, कादिहान्ताश्चतुर्विंशतिवर्णाः सूर्यकलाः, अकारादिविसर्जनीयान्ताश्चन्द्रकलाः षोडशवर्णाः, मकारादिलकारान्ताः दशवर्णा अग्निकला, एवं रविचन्द्रवह्नि-रूपामित्यर्थः। तथा चोक्तम्—

**'षोडशेन्दोः कला भानोर्द्विर्द्वादश दशानले ।**
**सा पञ्चाशत्कला ज्ञेया मातृका चक्ररूपिणी ।।'** इति।

एवं कामरूपां चिकित्वा ज्ञात्वा, नरः मनुष्य उपासकः। जायते भाति। कथमित्यत आह-कामरूप इति, कन्दर्पसदृशाऽऽकार इति यावत्। अत एव काम्यः वनिताभिः स्पृहणीयश्च भवतीत्यर्थः। उपासको नरः ईकारोर्ध्वगतमेकं बिन्दुं श्रीदेव्या मुखं ज्ञात्वा, ईकारोभयपार्श्वस्थितबिन्दुद्वयं स्तनद्वयं विभाव्य, पश्चात् त्रिबिन्द्वात्मकं रेफं त्रिकोणकारं योनिं ज्ञात्वा, तत्र वक्त्र-कुचद्वययोनिषु प्रधानाङ्गेषु कामकलाबीजं सञ्चिन्त्य, देवीरूपतया आत्मनस्तादात्म्यं सम्पादयेत्। एवं कृतं चेत् सर्वासां नारीणां संक्षोभको भवतीत्यर्थः। यथोक्तं चतुःशत्याम् (२ वि. २०१-२०२)।

**'बिन्दुं सङ्कल्प्य वक्त्रं तु तदधस्तात् कुचद्वयम् ।**
**तदधस्ताद्धकारार्धं चिन्तयेत् तदधोमुखम् ।।**

**तत्र कामकलारूपामरुणां चिन्तयेदिह ।**
**ततस्तेनैव रूपेण निजरूपं विचिन्तयेत् ।।'** इति।

एवं मादनप्रयोगा अनेके सनत्कुमारसंहितायां सप्तशत्यामुक्ताः, ते तत एवावगन्तव्याः।

अत्रेदमतिरहस्यम्—'**यत्परः स महेश्वर**' इति श्रुत्युक्तरीत्या.......... निखिलवेदादिशब्दोत्पादकानुत्तराक्षराभिधेयः परमेश्वरः स्वात्मभूताऽखिलप्रपञ्चनिलयात्मकविमर्शशक्तिमनुप्रविश्य बिन्दुभावमयते। ततः सा विमर्शशक्तिरपि स्वान्तर्गतप्रकाशमयबिन्दुमनुप्रविशति। ततश्च बिन्दुरुच्छूनो भवति। तस्माद् बिन्दोर्नादात्मिका समस्ततत्त्वगर्भिणी तेजोमयी नीवाराग्रवत्सूक्ष्मरूपिणी निर्गत्य शृङ्गाररूपतामुद्वहति। एवं च **बिन्दुनादस्वरूपयोस्तयोः प्रकाशविमर्शयोः अहमिति शरीरं भवति। एवं बिन्दुनादस्वरूपयोस्तयोर्मध्ये एकः विमर्शः रक्तबिन्दुरूपं भजते, अपरः प्रकाशः शुक्लबिन्दुभावमेति। उभयोर्मेलने मिश्रबिन्दुरूपं सर्वतेजोमयं परमात्मस्वरूपं भवति।** तथा च रहस्याम्नायेऽयमर्थः सम्यङ् निरणायि—

**'प्रसीद भगवन् शम्भो! ममात्मोपासनं प्रति ।**
**यो यो भवति सन्देहस्तं भवान् वक्तुमर्हति ।।**

**आत्मानुसन्धयाऽऽत्मानं परमात्मीकृतरूपिणः ।**
**भगवन्! यः परानन्दः स कथं स्याद् वद प्रभो ।।'**

**'इति पृष्ठवर्तीं देवीं प्रत्याह परमेश्वरः ।**
**सकलाधारभूतो यः समस्तस्योपरि स्थितः ।।**

**तस्मिन्नात्मनि सन्धाय स्वात्मानं परमं व्रजेत् ।**
**आवयोर्जगदात्मत्वात् तादात्म्यादावयोरपि ।**
**आवयोरपि तादात्म्यं कथं योगोऽपि सम्भवेत् ।।**

**आत्मोपासनमानन्दं सर्वेषां विद्धि जानताम् ।**
**तादात्म्यादावयोर्नित्यं जगत्प्राणावुभौ हि नौ ।।**

**ज्ञात्वैतान् सकलान् सम्यग् जानीयात् संविदं पराम् ।।'**

इत्यादिप्रश्नपञ्चकोत्तरमाह शिवः—

**''शिवकामात् परं तत्त्वं वर्ण्यतामिति चेच्छृणु ।**
**स चोदयः प्रिये! वक्तुं नालं वाग्विषयाऽतिगात् ।।''**

इत्यादिना बिन्दुत्रयस्वरूपनिरूपणं कृतम्। तत् त्विदं प्रसङ्गादुक्तम्। अन्यत् सर्वं तत एवाऽवगन्तव्यम्। श्रुतिरपि—'**य एको वर्णो बहुधा शक्तियोगात् वर्णाननेकान् निहितार्थो दधाति**' इति। एतदेव बिन्दुत्रयस्वरूपं विवृणोति।

**'बिन्दुरहङ्कारात्मे'**ति। बिन्दुरुक्तस्वरूपः। अकारहकारौ आत्मा स्वरूपं यस्य। 'सवर्णात् कार' इति सूत्रेण 'हं' शब्दात् 'कार' प्रत्ययः। 'ह्रीङ्कार' इतिवत्। अत एव एतन्मिथुनसमरसाऽऽकार एतयोः अकारहकाराख्ययोः प्रकाशविमर्शयोर्मिथुनं द्वन्द्वम्। तस्य दिव्यदम्पतिरूपस्य मिथुनस्य समरसः परस्परानुप्रविश्यमान-मायानुकूल्यम्, तदेवाकारः स्वरूपं यस्य सः। एवंभूतो रविः। सितशोणबिन्दु-समरसीभूतो मिश्रबिन्दुरित्यर्थः। लोकेऽपि सूर्यस्य मिश्ररूपत्त्वम्, अग्नीषोमयोः प्रवेशनिर्गमश्रवणादेवं वर्णयति। यथा वा—'उद्यन्तं वा आदित्यमग्निरनुसमारोहति, अग्निं वाऽऽदित्यः सायं प्रविशति' इति श्रुतेः, 'अमा सह सूर्याचन्द्रमसौ यस्यां तिथौ तिष्ठतः' इत्यमाशब्दव्युत्पत्त्या चन्द्रसूर्ययोः प्रवेशनिर्गमने प्रसिद्धे। तस्माद् रविर्मिश्रबिन्दुरेखा, अत एव तस्योपास्यत्वमाह—'काम' इति। काम्यते अभिलष्यते स्वात्मत्वेन परमार्थविद्भिः महद्भिर्योगिभिरिति कामः। तत्र हेतुः—'कमनीयतये'ति। कमनीयत्वं तु यथा छान्दोग्योपनिषदि—

**'अथ य एषोऽन्तरादित्यो हिरण्मयः पुरुषो दृश्यते। हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व एव सुवर्ण'** इति। ईशावास्येऽपि—**'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्'** इति।

तथा तत्रैव—'समूहतेजो यत् ते रूपं कल्याणतमं तत् ते पश्यामी'ति च। महासुन्दरं कामेश्वरमभिधाय तादृशमहिमानं परामृशति। रहस्याम्नाये च—

**'निरुत्तरं निराधारं संविदानन्दसागरम् ।**
**यदेतच्छाम्भवं दिव्यं निर्वाणाधारतां गतम् ।।'** इति।

**कला विमर्शशक्तिः। विमर्शो नाम विश्वाधारेण वा विश्वप्रकाशेन वा विश्वोपसंहारेण वा 'अकृत्रिमोऽहमि'ति स्फुरणम्। तद्रूपेति यावत्।** दहनो वह्निः। इन्दुश्चन्द्रः। तावेव विग्रहौ आकारौ ययोः बिन्द्वोस्तौ दहनेन्दुबिन्दुदिग्रहौ बिन्दू। अयमर्थः—अग्नीषोमरूपिणी विमर्शशक्तिः, तदुभयकामेश्वराविनाभूता महात्रिपुरसुन्दरी बिन्दुत्रयसमष्टिरूपा कामकलेत्युच्यते। सैवोपास्येति सर्वागमैर्घुष्यते।

श्रीमद्भगवत्पादैरप्युक्तम्—

**'मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो**
**हरार्द्धं ध्यायेद् यो हरमहिषि! ते मन्मथकलाम् ।**
**स सद्यः सङ्क्षोभं नयति वनिता इत्यतिलघु**
**त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगीम् ।।'**

**अयमत्र निष्कर्षः**—स्वान्तर्गतानन्ताक्षरराशिमयमहामन्त्रमयी पूर्णाहन्तामयी

प्रकाशानन्दसारा बिन्दुत्रयसमष्टिभूता दिव्याक्षररूपिणी कामकला महात्रिपुरसुन्दरी मातृका परयोगिभिर्महेश्वरैः अनिशमनुस्मर्तव्येति।

विज्ञानभैरवभट्टारकोऽपि—

**'बिन्दुरूपस्य चक्रस्य स्थूलवर्णक्रमेण तु ।**
**अर्धेन्दुबिन्दुनादान्तशून्योच्चारात् भवेच्छिवा ।।'** इति।

अमृतानन्दयोगिनश्च—

**'बैन्दवे परमाकाशे सच्चिदानन्दलक्षणे ।**
**निष्प्रपञ्चे निराभासे निर्विकल्पे निरुद्यमे ।।**

**अनुत्तरचमत्कारपरामर्शपवित्रिते ।**
**निरुत्तरमहाशून्ये शून्याऽशून्यान्तवर्जिते ।।**

**स्त्रीपुन्नपुंसकाख्याभिः कल्पनाभिरकल्पिते ।**
**आदिमध्यान्तनिर्मुक्ते भावपञ्चकभासिते ।।**

**सर्वोपमानरहिते प्रकाशानुभवात्मके ।।'** इति।

सहस्रनामस्तोत्रे च—'मूलमन्त्रात्मिका मूलकूटत्रयकलेवरा' इति।

**अयमर्थः**—मूलमन्त्रः श्रीविद्याशब्दवाच्यः, 'कामकला श्रीविद्याकामसेविते' त्युक्तत्वात्। तदात्मिका तत्स्वरूपेत्यर्थः। कुत इत्याह मूलेति। मूलस्तु कामकला। द्वन्द्वं कामराजं हरार्धकलातृतीयं कूटमिति विवेकः। कामकलायाञ्च मुखपादादिकं सम्यक् प्रतिपादितम्। अत्र कामकला ऊर्ध्वबिन्दु श्रीमहात्रिपुरसुन्दर्याः केशाद्यवयवसहितं वक्त्रम् अधोबिन्दुद्वन्द्वम् बाहुचतुष्टयाद्यवयवसहितं स्तनद्वयम्, हरार्धकला पादद्वयाद्यवयवसहिता योनिः, समष्टिकामकलाभूतपरमाक्षरं तु सर्वावयवसम्पूर्णा परमसौन्दर्यवती कामेश्वराङ्कनिलया सर्वाभरणसम्पूर्णा श्रीमहात्रिपुरसुन्दरी बाह्यकामकलेति निष्कर्षः। उक्तानि यन्त्र-मन्त्र-देवतास्वरूपाणि। इतः परं पुरश्चर्या वक्तव्येत्यत्र किञ्चिदुच्यते—

**'सद्गुरोस्तु मनुं प्राप्य त्रिपञ्चार्णपरिष्कृताम् ।**
**सम्यक् संसाधयेद् विद्वान् वक्ष्यमाणप्रकारतः ।।**

**मुद्राविशेषतत्त्वज्ञो दीक्षाक्षपितकल्मषः ।**
**अर्चयेत् परमेशानीमभीष्टफलमाप्नुयात् ।।'**

इति हयग्रीववचनात् गुरुशिष्यदीक्षालक्षणप्रकाशकानि कनिचिद्वचनानि लिख्यन्ते। श्रीहयग्रीवः—

'गुकारस्त्वन्धकारः स्याद् रुकारस्तन्निरोधकः ।
अन्धकारनिरोधित्वाद् गुरुरित्यभिधीयते ।।

यः प्रसन्नः क्षणार्धेन मोक्षलक्ष्मीं प्रयच्छति ।
दुर्लभं तं विजानीयाद् गुरुं संसारतारकम् ।।

शरीरमर्थं प्राणं च तस्मै श्रीगुरवे दिशेत् ।। इति।
महालक्ष्मीतन्त्रेण पुरश्चर्यायाम्-
तदधीनं चरेन्नित्यं तद्वाक्यं नैव लङ्घयेत् ।।'

'मनुष्यचर्मणा बद्धः साक्षात् परशिवः स्वयम् ।
सच्छिष्यानुग्रहार्थाय गूढं पर्यटति क्षितौ ।।

सद्भक्तरक्षणायैव निराकारोऽपि साकृतिः ।
शिवः कृपानिधिर्लोके संसारीव हि चेष्टते ।।

अत्रिनेत्रः शिवः साक्षादचतुर्बाहुरच्युतः ।
अचतुर्वदनो ब्रह्मा श्रीगुरुः परिकीर्तितः ।।

श्रीगुरुं परतत्त्वाख्यं तिष्ठन्तं चक्षुरग्रतः ।
भाग्यहीना न पश्यन्ति सूर्यमन्धा इवोदितम् ।।' इति।

तत्रैव शिष्यलक्षणमपि भणितम्—

'ब्रह्मादिस्तम्बपर्यन्तं यस्य मे गुरुसन्ततिः ।
तस्य मे सर्वशिष्यस्य को न पूज्यो महीतले ।।

इति सर्वानुकूलो यः स शिष्यः परिकीर्तितः ।
शीलादिविमलानेकगुणसम्पन्नभावनः ।।

गुरुशासनवर्तित्वाच्छिष्य इत्यभिधीयते ।।
श्रुतिषु च गुरुशिष्यलक्षणमुक्तम्। एवम्-
'वेदान्ते परमं गुह्यं पुराकल्पप्रचोदितम् ।
नाऽप्रशान्ताय दातव्यं न पुत्राय न शिष्याय पुनः ।।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।।'

इत्यादिना। पूर्णानन्दयोगिभि'रादिगुरुः परमशिव' इति प्रतिपादितम्, यथा—

'आसीनः श्रीपीठे कृतयुगकाले गुरुः शिवो विद्याम् ।
तस्यै ददौ स्वशक्त्यै कामेश्वर्यै विमर्शरूपिण्यै ।।'

**अयमर्थः**—श्रीपीठे मध्यत्रिवल्यन्तर्गते ओड्याणपीठे, आसीनः नित्यसंनिहितः, गुरुः ज्ञानोपदेष्टा। तथा च शिवसूत्रम्—'गुरुरूपाय' इति। शिवः सर्वप्रवर्तकः परमात्माः कृतयुगकाले कृतयुगादौ। तस्यै सा शक्तिः सर्वभूतानां ब्रह्मा विष्णुश्च रुद्रश्च वाणी लक्ष्मी भवानीति ताः, साम्प्रदायिकाः क्रमात् सर्वलोकप्रसूत्वेन सैव त्रिपुरा सर्वानन्दं ददाति चेति रहस्योपनिषदुक्तरीत्या निरवधिकानन्ददायिन्यै स्वशक्त्यै।

**'परोऽपि शक्तिरहितः शक्तः कर्तुन्न किञ्चन ।**
**शक्तश्च परमेशानि! शक्त्या युक्तो भवेद् यदि ।।'**

इत्यागमानुसन्धानैकस्वस्वरूपसक्ता सम्प्रदात्र्यै विमर्शरूपिण्यै इति।

गुरुः शिष्यं चिरकालं सुपरीक्ष्य विद्यामुपदिशेत्। परीक्षासूत्तीर्णं शिष्यं दीक्षया संस्कुर्यात्।

दीक्षालक्षणं च श्रुत्यादिषु दृश्यते। तथा मन्त्रोपदिषदि—

**'ददाति शिवतादात्म्यं क्षिणोति च मलत्रयम् ।**
**अतो दीक्षेति सा प्रोक्ता दीक्षाशब्दार्थवेदिभिः ।।'** इति।

महालक्ष्मीतन्त्रे च—

**'दीयते देवताभावस्तथा कल्मषकर्दमाः ।**
**क्षाम्यन्ते च यया पुंसां दीक्षामाचक्षते तु ताम् ।।'** इति।

आगमेऽपि—

**'दीक्षापूर्वं महेशानि! विद्यामुपदिशेद् गुरुः ।**
**दीक्षा च सायुज्यदायिनीति बुधा विदुः ।।'**

**'दीयते पराशिवैक्यभावना क्षीयते सकलपाशसञ्चय'**

इंत्यभियुक्तोक्तेश्च दीक्षा अवश्यं कर्तव्या। सा च त्रिविधाआणवशाक्त-शाम्भवभेदात्।

**'त्रिविधा सा भवेद् दीक्षा प्रथमा चाणवी परा ।**
**शाक्तेयी शाम्भवी चेति सद्योमुक्तिप्रदायिनी ।।'**

इति वचनात्। तत्राऽऽणवीदीक्षा विशेषद्रव्यनिर्वर्त्यपरदेवतातर्पणध्याना-ऽऽसनहोमादिकर्मसाध्या।

**'मन्त्रासनार्चनाध्यानहोमोपायादिभिः कृता ।**
**दीक्षा सा त्वाणवी प्रोक्ता यथाशास्त्रोक्तरूपिणी ।।'**

इत्युक्ता। शाक्तेया तु यथोपनतशक्तिसिद्धार्थसाध्या। तथा चोक्तम्—

**'सिद्धे शक्तिं समालोक्य तथा केवलया शिशौ ।**
**निरुपायं कृता दीक्षा शाक्तेयी परिकीर्तिता ।।'**

शाम्भवी तु विशिष्य तयोः अभिसन्धिं विना केवलदेशिकानुग्रहकृता दीक्षा। यथोक्तम्—

**'अभिसन्धिं विनाऽऽचार्यशिष्ययोरुभयोरपि ।**
**देशिकानुग्रहेणैव शिवतादात्म्यकारिणी ।।**
**सेयं हि शाम्भवी दीक्षा शिवावेशनकारिणी ।।'** इति।

एवंविधदीक्षाभावे साधकस्य कुत्राप्यधिकारो नास्ति। तथा च श्रीमालिनी-विजयकारः—

**'नाऽत्राधिकारिता दीक्षां विना योगोऽस्ति शाङ्करे ।**
**न च योगाधिकारित्वं त्रयाणामेकमेव वा ।।**
**अभिसन्धिरहिताचार्यकृपामात्राद् यथा भवेत् ।**
**अपि मन्त्राधिकारित्वमुक्तं च शिवदीक्षया ।।'** इति।

शिष्यस्य वित्ताभावे आचार्यः शिष्ययोग्यतामवधार्य स्वधनेन वा कुर्यात्। स्वस्याप्यस्वभावे लघूपायेन वा कुर्यात्।

**'स्वधनेन दरिद्रस्य कुर्याद् दीक्षां स्वयं गुरुः ।**
**अपि दूर्वाम्बुभिर्यद् वा दीक्षया मोक्षयेच्छिशुम् ।।'**

इति वचनात् सर्वात्मना दीक्षितस्यैव ब्रह्मविद्यायामधिकारो नान्यस्येति स्थितिः। **अत्राऽऽणवीदीक्षायां शक्तिदीक्षायां च अधिकृताः कौलाः।** परदेवतातर्पणाऽऽसनहोमादिकर्मसाध्यत्वाद् दीक्षाद्वयस्य बाह्यपूजारतत्वाच्च तेषाम्। समयिनस्तु शाम्भवीदीक्षायामधिकृताः। तस्याः केवलदेशिकानुग्रहमात्रसाध्यत्वात्, अन्तराराधनपरत्वाच्च तेषाम्। यथोक्तं सनत्कुमारसंहितायाम्—

**'बाह्यपूजा न कर्तव्या कर्तव्या बाह्यजातिभिः ।**
**सा क्षुद्रफलदातॄणां मोहिकाऽर्थैकसाधनात् ।।**
**बाह्यपूजारताः कौलाः क्षपणाश्च दिगम्बराः ।**
**कापालिकाश्चेतिहासाः वामकास्तन्त्रवादिनः ।।**
**अन्तराराधनपरा वैदिका ब्रह्मवादिनः ।**
**जीवन्मुक्ताश्च नरा एते त्रिषु लोकेषु सर्वदा ( देवि? ) ।।'** इति।

**कौला आधारचक्रपूजकाः। क्षपणकाः योषित्त्रिकोणपूजकाः। कापालिका दिगम्बराश्चोभयत्र निरताः। इतिहासाः भैरवयामलप्रामाण्यवादिनः। वामकाः तन्त्रवादिन इत्येके वर्णयन्ति वामेकेश्वरतन्त्रप्रामाण्यवादिनः।** 'केवलचक्रपूजकास्ते वेदबाह्या' इत्यन्वयः। आन्तरपूजारताः ब्रह्मवादिनः शुभागमतत्त्ववेदिनः। 'चन्द्रकला-विद्याष्टकमि'ति महामाया-शम्बरादि-चतुःषष्टितन्त्रेष्वन्तर्गतं श्रीविद्याप्रतिपादकं तन्त्रमस्ति। चन्द्रकला, ज्योत्स्नावती, कलानिधिः, कुलार्णवः, कुलेश्वरी, भुवनेश्वरी, बार्हस्पत्यम्, दूर्वासमतं चेति। अस्मिन् तन्त्राष्टकेऽत्रैवर्णिकानां शूद्रादीनामपि अधिकारोऽस्ति। तत्र ब्राह्मणादीनाधिकृत्य सव्यमार्गेण प्रादक्षिण्येन सर्वोऽप्यनुष्ठानकलापः प्रतिपादितः। शूद्रानधिकृत्य अपसव्यमार्गेण वामाचारो निरूपितः। अतश्चन्द्रकलाविद्याष्टकं कुलसमयानुसारित्वेन 'मिश्रक'-मित्युच्यते।

**'मिश्रकं कुलमार्गं च परित्याज्यं हि शाङ्करि!'**

इति ईश्वरवचनात् मिश्रकं कौलमार्गप्रदर्शनपरत्वात् परित्याज्यमेव।

**अत्रेदं रहस्यम्**—शाक्तास्तावत् प्रथमतो द्विविधाः। कौलाः समयिनश्चेति। तत्र कौला द्विविधाः—पूर्वकौला उत्तरकौलाश्चेति। तत्रापि पूर्वकौलास्त्रिविधाः-यथा—मूलाधारनिष्ठाः स्वाधिष्ठाननिष्ठाः उभयनिष्ठाश्च। उत्तरकौलाश्चतुर्विधाः, मातङ्गीतन्त्रनिष्ठाः, वाराहीतन्त्रनिष्ठाः, कौलमुख्यतन्त्रनिष्ठा भैरवीतन्त्रनिष्ठाश्चेति। तदुक्तं सुभगोदये कौलभागपटले—

**'मूलाधारे स्वाधिष्ठाने च भजन्ति केचनेशानीम् ।**
**अन्यतरस्मिंश्चान्ये तेनैव पूर्वाः कौलिनस्त्रिविधाः ।।**

**मातङ्गीवाराही-कोलमुखी-भैरवीमतस्थास्ते ।**
**आन्तरपूजारहिता उत्तरकौलाश्चतुर्विधा ज्ञेयाः ।।'** इति।

आधारचक्रत्रिकोणे आधारबिन्दुस्तिष्ठतीति तावत् प्रसिद्धम्। अत्र कौलमते त्रिकोणमेव बिन्दुस्थानम्। स एव बिन्दुस्तत्राराध्यः। अत एव कौलास्त्रिकोणे नित्यं बिन्दुं समर्थयन्ति। तत् त्रिकोणं च द्विविधम्- श्रीचक्रान्तर्गतनवयोनिमध्यवर्तिनी योनिरेका, अन्या च सुन्दर्यास्तरुण्याः प्रत्यक्षयोनिः। तत्र श्रीचक्रगतनवयोनि-मध्यगतयोनिं भूर्जपत्रहेमपीठादौ लिखितां पूर्वकौलाः पूजयन्ति। तरुण्याः प्रत्यक्षयोनिमुत्तरकौलाः पूजयन्ति। उभयं योनिद्वयं बाह्यमेव, नान्तरम्। अत एषामाधारचक्रमेव पूज्यम्। तत्र स्थिता कुण्डलिनी शक्तिः कौलिनीत्युच्यते। सैवोपास्या त्रिकोणपूजकानामिति रहस्यम्। एषा कुण्डलिनी शक्तिर्बिन्दुरूपिणी निद्राणैव पूज्या। तस्याः सर्वदा निद्रास्वाभाव्यात्। सा पूजा तामिस्रा।

**कुण्डलिनीप्रबोधो यदा स्यात् तत्क्षण एव मुक्तिः कौलानाम्। अत एव 'क्षणमुक्ताः कौला' इति व्यवहारः।** अत्र कौलमते सुरामांसमधुमत्स्यादिद्रव्यैः समाराधनम्। वामाचारप्रवृत्त्या प्रत्यक्षत्रिकोणबिन्दुस्थानं मन्मथच्छत्रं सम्पूजयन्ति। अधोमुखं त्रिकोण-मधोमुखमेव चक्रं पूजयन्ति।

दिगम्बरक्षपणकादयस्तु स्त्रियमुत्तानां कृत्वा ऊर्ध्वत्रिकोणं पूजयन्ति इति रहस्यम्। यद्यप्यत्र बहु वक्तव्यमस्ति, तत्त्ववैदिकमार्गत्वात् स्मरणार्हमपि न भवति तथापि समयिमतमार्गप्रदर्शनोपयोगितया दिङ्मात्रमुक्तमित्यलमतिविस्तरेण।

**समयिनो नाम समीचीनाः, अयः शुभावहो विधिः येषामस्तीति तथा।** यद्वा- सम्यगयति सहस्रकमलं गच्छति इति समया कुण्डलिनी, सा येषामस्तीति समयिनो योगिनः। अथवा समया नाम शम्भुना पञ्चविधं साम्यं यातीति समया। शम्भोरपि देवाः पञ्चविधं साम्यमिति समयत्वम्। अत उभयोः समप्राधानेनैव साम्यं विज्ञेयम्। पञ्चविधसाम्यं तु अधिष्ठानसाम्यम् अनुष्ठानसाम्यम् अवस्थासाभ्यं रूपसाम्यं नामसाम्यं चेति साम्यपञ्चकम्। अतः समयपूजकाः समयिनः। ते चतुर्विधाः—

(१) स्वर्णादिरचितचक्रविग्रहेषु वैदिकविधानेनाऽर्चना रताः।

(२) अन्तर्बहिश्चार्चना रताः।

(३) अन्तरेवार्चनरताः।

(४) अर्चनाधीनाश्चेति।

तेषूत्तरं श्लाघ्यतमा ज्ञेयाः। तत्र ये असञ्जातयोगाः साधकास्ते चक्रविग्रहादौ देवीं वैदिकविधानेनाराधयन्ति। ये तु ईषज्जातयोगसिद्धयः, ते अन्तर्बहिश्च पूजयन्ति। ये तु सिद्धयोगाः, ते अन्तरेव देवीमर्चयन्ति। एते त्रयोऽपि इच्छागृहीत-शरीरां संस्कारसदृशाकारसहस्रदृशं देवीं यथायोगमर्चयन्ति। ये तु प्राप्तचित्तशुद्धिकाः निर्गुणब्रह्माऽभेदानुसन्धायिनः, ते पूज्यपूजकपृथक्ज्ञानव्यतिक्रमात् नैवाऽऽराधयन्ति। तेषां कदाचिद् भेदानुसन्धानेऽपि प्रत्यवायो नास्ति। तदीयव्यापारस्यैव तदानीं देवीपूजारूपत्वात्। तदुक्तमाचार्यपादैः—

**'जपो जल्पः शिल्पं सकलमपि मुद्राविरचना**
**गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।**
**प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा**
**सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ।।'**

इत्येवं समयिनश्चतुर्विधाः। तथाहि सुभगोदये—

**'बहिरेव केचिदपरे बहिरन्तः केचनान्तरीशानम् ।**
**आराधयन्ति कतिचिन्नैवाम्बां समयिनस्तुरीया हि ।।'** इति।

समयिनो योगीश्वरा जीवन्मुक्ताः संसारयात्रामनुवर्तमानाः सादाख्यतत्त्वमनुचिन्तयन्तः आत्मैकप्रवणा वर्तन्ते। समयिनां मते समयस्य सादात्म्यतत्त्वस्य सपर्यासहस्रकमल एव, न तु बाह्यपीठादौ। ये तु समयिनः योगीश्वराः विजने गृहान्तरे बद्धपद्मासीनाः वशिनो सादाख्यतत्त्व-ध्यानैकनिष्ठा वर्तन्ते तेषां चतुर्विधषड्विधैक्यानुसन्धानमेव भगवत्याः सपर्या इत्यर्थादुक्तं भवति। अतो बाह्यपूजा तत्कलापश्च नास्ति समयिनामिति रहस्यम्। जीवन्मुक्तानामविद्यानिवृत्तावपि कुलालचक्र-भ्रमणन्यायेन देहबन्धः। यथोक्तं षष्ठीतन्त्रसप्तम्याम्—

**'सम्यग्ज्ञानाधिगमाद् धर्मादीनामकारणत्वप्राप्तौ ।**
**तिष्ठति संस्कारवशाच्चक्रभ्रमवद् धृतशरीरः ।।'**

एवमाणवशाक्तदीक्षाधिकृतानां कौलानां शाम्भवदीक्षाधिकृतानां च समयिनां यथाधिकारं बाह्याभ्यन्तरपूजे पुरश्चरणाङ्गत्वेन अवश्यं कर्तव्यम्। अकरणे प्रयोगादौ दोषदर्शनात्। तथा च महालक्ष्मीतन्त्रे—

**'अविधाय पुरश्चर्यां यः कर्म कुरुते मुने ।**
**देवताशापमाप्नोति न च सिद्धिं स विन्दति ।।**

**पूजा त्रैकालिनी नित्यं जपतर्पणमेव च ।**
**होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ।।'** इति।

अतः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति; यज्ञेन, दानेन, तपसाऽनाशकेनेति यज्ञस्यापि ब्रह्मविषयता श्रूयते। समयज्ञपूजा—

**'द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ।।**

**श्रेयान् द्रव्यमयाद् यज्ञात् ज्ञानयज्ञः परन्तप ।'**

इति भगवद्वचनाद् बाह्याभ्यन्तरपूजाद्वयात्मकयज्ञसंयुक्ता ।।

अत्रेदं तात्पर्यम्—गुरुणा दीक्षापूर्वं मन्त्रोपदेशः कर्तव्यः, शिष्येण च गुरूपदिष्टमन्त्रस्य पुरश्चर्या कर्तव्या। **पुरश्चर्या च त्रिकालपूजाजपोपेता। पूजा च द्रवद्रव्यविशेषतर्पणरूपा,** 'सन्तर्पणं तृप्तिमयं दैवतस्याऽमृते न तु' इत्युक्तत्वात्। द्रवद्रव्यं च हेतुभूतनिदानकारणं प्रथमादिशब्दाभिधेयं परमामृतरूपं मधु, तेनैव

परदेवतायागस्य साध्यत्वात्। सोमेना-ऽग्निष्टोमयागवत्। न च वाच्यम् 'अग्नीषोमीयं पशुमालभेत' 'सोमेन यजेत', 'सोमग्रहान् गृह्णाति', 'ऐन्द्रवायवं गृह्णाति', 'मैत्रावरुणं गृह्णाति', इत्यादि विधिसद्भावयुक्तम् इतरेषां ज्योतिष्टोमादियागानां सोमादिसाध्यत्वम्। इह तु 'ब्राह्मणो न कलञ्जं भक्षयेत्', 'न सुरां पिबेत्', न मांसमश्नीयात्' इत्यादिभिर्निषेधैरिदं दर्शनमनुपपन्नम् इति। न वयं निषेधविधिमुल्लङ्घ्य स्वयमेव निदानादिना परदेवतातर्पणं कर्तुम् उचितमिति ब्रूमः। किन्तु इदमेव शाम्भवदर्शनम् औपनिषदसम्प्रदायादागतमिति निश्चित्यैवावोचाम्। तर्हि निषेधस्य का गतिः? इति चेत्, 'अदीक्षितस्याऽयं निषेधविधिरि'ति ब्रूमः। दीक्षितस्याऽनेनैव हेतुना दीक्षायागः कर्तव्य इति उपनिषदेवाहपरिस्रुतमि'त्यादिना॥११॥

**श्रीभास्करारायप्रणीतभाष्यम्—**

प्रसङ्गात् कामं कामकलाध्यानं बहिर्यागाश्रितमुपदेष्टुमेकादशीमृच-माहद्वामण्डलेति।

द्वौ मण्डलौ द्वौ स्तनौ एकं बिन्बं मुखं त्रीणि सदनानि भूगृहाणि गुहा हकारार्द्धरूपा। यद्यपि 'बिम्बोऽस्त्री मण्डलं त्रिषु' इति कोशेन बिम्बपदस्यापि मण्डलवाचकत्वेन चतुर्थ्यामृचि वर्णितानां त्रयाणां मण्डलानामेवैष विभागस्तत्रापि वह्निसूर्यमण्डलावेव स्तनौ बिम्बपदस्वारस्यात्, **पाठक्रमात्तदधस्तनमिन्दुबिम्बमेव मुखम्** अधःपदस्वारस्यात्, तदधस्तनमेव भूपुरं हकारार्द्धमिति स्पष्टं प्रतीयते। सन्ति व्यत्यस्तान्यपि कामकलारूपाणि बहुविधानि तन्त्रेषु तत्र तत्र निर्दिष्टानि, तथापि भगवत्पादैः 'मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो हकारार्धं ध्यायेत्' इत्युपबृंहणा**दार्थक्रमेण पाठक्रमबाधात्**। बिम्बपदं बिन्दुपरं सद् बिन्द्वादिमन्वस्रान्तचक्रगणपरम्। **'मण्डलत्रयरूपन्तु चक्रशक्त्यनलात्मकम्'** इति सुन्दरीश्लोके मण्डलपदस्य दशारादिचक्रपरत्वेनापि व्याख्यानदर्शनात्। बिन्द्वादिमण्डलानां षण्णामेकावयवत्वेन विभावनयैकमिति पदम्। द्वा मण्डलेति अष्टदलषोडशदलचक्रद्वयपरमिति योज्यम्। **इदमवयवत्रयकथनं सर्वावयवोपेत-लक्षणम्**। वस्तुतः शरीरेऽपि त्रय एवावयवाः शीर्षादिघण्टिकान्तः कण्ठादि-स्तनान्तः हृदयादिसीवन्यन्तश्च। केशपाणिपादन्तु तत्तच्छाखा इति। एवं सर्वचक्रात्मना परिणतां कामीं कामेश्वरात्मकमन्मथसम्बन्धिनीं कलां चित्कलां काम्यरूपां कमनीयस्वरूपां विदित्वा ज्ञात्वा। चिकित्वेति शाखान्तरे पाठः। नर उपासकः कामरूपो मन्मथसुन्दरस्सद्यस्सकलवनिताक्षोभकरो जायते।

अत्यल्पमिदमुच्यत इत्याह—काम्य इति विशेषणश्रवणात् त्रिभुवनान्तर्वर्तिसकलजनैरभिलषणीयरूपश्च भवति। तदुक्तं भगवत्पादैः—

**'ध्यायेद्यो हरमहिषि ते मन्मथकलाम्।**
**स सद्यः संक्षोभं नयति वनिता इत्यति लघु**
**त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम्।।'**

कामरूपत्वकाम्यत्वकामः कामकलां ध्यायेदिति गुण[1]—फलसम्बन्धविधिः। अत्र फलार्थतया ध्यानस्य स्वतः क्रियारूपस्याश्रयान्तरानपेक्षतया[2]श्येनक्रत्वादेः सौमिकाङ्गसंवलितत्वस्येव बहिर्यागाङ्गसंवलितत्वस्याप्यभावेन बहिर्यागाद् बहिरप्यनुष्ठानात् फलमिति तु भगवत्पादाशयः।

**'बिन्दुं सङ्कल्प्य वक्त्रन्तु तदधःस्थं कुचद्वयम्।**
**तदधःस्थं सपरार्धन्तु चिन्तयेत्तदधोमुखम्।।'** इति।

नित्याषोडशिकार्णवे। क्रतुप्रकरणस्थविधिनास्य ध्यानस्य क्रत्वर्थत्वमपि स्मर्यत इति चेत्, किं तावता? [3]अन्नाद्यकामनाफलकावेष्टेरिव फलार्थिना बहिःप्रयोगस्याप्यक्षतत्वात्। अत एव भगवत्स्मरणमुपक्रम्योक्तं भक्तिसूत्रे-'बहिरन्तस्तदुभयमवेष्टिवत्सर्वमि'ति ।।११।।

---

१. 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र दध्नो गुणस्येन्द्रियफलसम्बन्धो विधीयते। तत्र दध्नस्सिद्धद्रव्यत्वेन फलसम्पादकत्वानुपपत्तेः क्रियारूपमाश्रयमपेक्षते। प्रकरण-बलेन प्रकृताग्निहोत्रहोम आश्रयत्वेन सम्बध्यते। तथा च प्रकृतहोमाश्रितेन दध्नेन्द्रियरूपं फलं भावयेदिति बोधः। प्रकृते तु सकललोकाभिलषणीयत्वरूपफलं प्रति कामकलाध्यानं विधीयते। विधेयस्य ध्यानस्य क्रियारूपत्वेनाश्रयापेक्षा नास्तीति कामकलाध्यानेन सकललोककाम्यत्वं भावयेदिति बोध इति भेदः।

२. विधेयस्य ध्यानस्य मास्त्वाश्रयापेक्षा, प्रकरणेन बहिर्यागाङ्गसम्बन्धसत्त्वात्तदपेक्षा वर्तत इति चेदाहश्येनक्रत्वादेरिति। 'श्येनेनाभिचरन् यजेत' इति विहितः क्रतुः सोमयागः। स च ज्योतिष्टोमविकृतिः। ज्योतिष्टोमविकृतौ। ज्योतिष्टोमादङ्गा-न्यतिदिश्यन्ते। अतस्सौमिकाङ्गसापेक्षत्वं श्येनयागस्य वर्तते। तद्वदत्र बहिर्याग-कामकलाध्यानयोः सापेक्षतापि नास्ति। अतो ध्यानमिदं बहिर्यागाद् बहिः स्वातन्त्र्येण फलाय विधीयत इति भावः।

३. राजसूये 'दिशामवेष्टयोभवन्ति' इत्यादिना आग्नेयोऽष्टाकपालः, ऐन्द्र एकादश कपालः, वैश्वदेवश्चरुः, मैत्रावरुण्यमिक्षा, बार्हस्पत्यश्चरुरिति पञ्चहविष्का-ऽवेष्टिर्नामेष्टिः विहिता। राजसूयान्तर्गताया अपि 'एतया अन्नाद्यकामं याजयेत्' इति वाक्येन राजसूयाद् बहिः प्रोयोगोऽप्यवेष्टेर्विहितः। एतन्न्यायेन कामकला-ध्यानप्रयोगोऽपि बहिर्यागाद् बहिर्भवतीत्यर्थः।

## भाषाव्याख्या

बहिर्याग के आश्रित कामकला के ध्यान का प्रसङ्गतः उपदेश करने के लिए ग्यारहवीं ऋक् को प्रस्तुत करते हैं—**द्वा मण्डलास्तना बिम्बमेकम्।**

मन्त्र की व्याख्या प्रस्तुत करते हैं—**द्वौ मण्डलौ स्तनौ एकं बिम्बं मुखं त्रीणि सदनानि भूगृहाणि गुहा हकारार्धरूपा।** दो मण्डल = दो स्तन, एक बिम्ब = मुख और तीन भूगृह ही सदन के रूप में निर्दिष्ट हैं। वे गुहा = हकारार्ध हैं। ईकार के दोनों भागों में चन्द्र और अग्नि के रूप में मण्डलरूप दो बिन्दु हैं। एक सूर्यात्मक बिन्दु ईकार के ऊर्ध्व भाग में स्थित है। इस प्रकार से उक्त सोम, सूर्य और अग्नि रूप बिन्दु सदन हैं। इस पूर्वोक्त कामी = शिवपत्नी के रूप में विराजमान काम्य रूप वाली कला (विमर्शशक्ति) का ज्ञान प्राप्त करके अर्थात् ध्यान करके मनुष्य = उपासक मदन के सदृश आकार वाला (कामरूपः कामस्य रूपमिव रूपं यस्य सः) कमनीय अर्थात् नारियों के लिए स्पृहणीय हो जाता। इस तरह से मन्त्र का पिण्डितार्थ प्रतीत होता है।

**काम्यते अभिलष्यते स्वात्मत्वेन परमार्थविद्भिर्योगिभिरिति कामः शिवः।** शिव के काम्यत्व में कमनीयता हेतु है। उस कमनीयता को छान्दोग्य में इस तरह प्रकट किया गया है—

**'अथ एषो अन्तरादित्यो हिरणमयः पुरुषो हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः।'**

उस काम की कला को विमर्शशक्ति के रूप में स्वीकार किया गया है। वह विमर्श क्या है? ऐसी अपेक्षा होने पर श्रीरामानन्दतीर्थजी ने कहा है—

**विमर्शो नाम विश्वाधारेण वा विश्वप्रकाशनेन वा विश्वोपसंहारेण वा 'अकृत्रिमोऽहमिति स्फुरणम्।'**

**'षोडशेन्दोः कला भानोर्द्विर्द्वादश दशानले।**
**सा पञ्चाशत् कला ज्ञेया मातृका चक्ररूपिणी ।।'**

इस वचन के अनुसार श्रीरामानन्दतीर्थ जी ने कामकला को पचास मातृकाओं के रूप में भी स्वीकार किया है। वह विमर्शरूपिणी कामकला चक्र के रूप में प्रतिष्ठित है जो बिन्दुत्रयसमष्टिरूप भी है। **'मूलमन्त्रात्मिका मूलकूटत्रयकलेवरा'**, इस सहस्रनामस्तोत्रीय वचन से मूलभूत श्रीविद्यामन्त्र भी कामकला के रूप में बोधित हो रहा है। जैसा कि कहा गया है—

**'कामकला श्रीविद्या कामसेविता।'**

श्रीभास्करराय ने सेतुबन्ध में कारणबिन्दु को 'कामकला' कहा है। यह कामकलात्मक बिन्दु चक्रबिन्दु के प्रति कारण है। वह क्या है? ऐसी अपेक्षा होने पर उन्होंने ही कहा है—**निर्बिन्दुक ईकारश्चतुर्थः।** अर्थात् श्रीविद्यामन्त्र में विद्यमान 'ह्रीङ्कार' में स्थित ईकार तीन

हैं जिन्हें 'महामाया' कहा जाता है। प्रथम वाग्भवकूट में बिन्दुरहित चौथा ईकार ही कारण बिन्दु है जिसे कामकला कहा जाता है। **'ईस्त्रिमूर्तिर्महामाया'**, इसके अधिकार में स्थित **'शिवोत्तमः शिवा तुष्टिश्चतुर्थी बिन्दुमालिनी।'** यह कोश ही प्रमाण है।

हादिविद्या के पक्ष में तृतीय शक्तिकूट के प्रथम अक्षर 'ह' में स्थित 'अकार' को कारणबिन्दु के रूप में स्वीकार किया जाता है। अकार भी बिन्दु है, यह बात 'बिन्दुःशून्यमकारः', इस कोश से प्रमाणित होती है। बिन्दु कहा जाने वाला यह अकार अन्य अकारों से अलग है। जैसा कि श्रीभास्करराय ही कहते हैं—

**'अत एवाकाराधिकारे कामेशीवासिनी वियत्' इति वियत् पदम्। कोशे बिन्दुपदेनाकारनिर्देशोऽकारान्तरव्यावर्तनाय। सर्वकारणरूपाकारस्यैव शून्याकारत्वात्।'**

प्रकृत मन्त्र में श्रीभास्कररायजी कुछ अपेक्षित तथ्य प्रकट करते हैं— **यद्यपि 'बिम्बोऽस्त्री मण्डलं त्रिषु' इति कोशेन।** 'बिम्बोऽस्त्री मण्डलं त्रिषु', इस कोश से 'बिम्ब' पद भी मण्डल का ही वाचक सिद्ध हो रहा है, अतः चौथे मन्त्र में वर्णित तीन मण्डलों का यही विभाग है। इनमें 'बिम्ब' पद के बल से अग्नि और सूर्य मण्डल स्तन हैं। पाठक्रम के अनुरोध से उसके नीचे विद्यमान चक्रस्थ भूपुर ही हकारार्ध के रूप में प्रतीत हो रहा है। कामकला के अनेक रूपों का उल्लेख तन्त्रग्रन्थों में विपरीत क्रम से है। श्रीभगवत्पाद ने सौन्दर्यलहरी में आर्थ क्रम से पाठक्रम का बाध स्वीकार करके मुख, स्तनयुगल और योनि के रूप में वर्णन किया है—

**'मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो**
**हरार्धं ध्यायेद् यो हरमहिषि! ते मन्मथकलाम्।**
**स सद्यः संक्षोभं नयति वनिता इत्यति लघु**
**त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम्।।'**

इसका भाव वही है जो प्रकृत मन्त्र का है। 'बिम्ब' पद का 'बिन्दु' अर्थ स्वीकार करके उसे बिन्दु से लेकर चतुर्दशकोण तक विद्यमान चक्रगण के बोधकत्व के रूप में इङ्गित करते हैं—**बिम्बपदं बिन्दुपरं सत्।** इस व्याख्यान में हेतु का निर्देश करते हैं— **'मण्डलत्रयरूपन्तु चक्रं शक्त्यन लात्मकम्' इति सुन्दरीश्लोके मण्डलपदस्य दशारादिचक्रपरत्वेनापि व्याख्यानदर्शनात्।** 'तीन मण्डल वाला चक्र पाँच शक्ति त्रिकोण और चार अग्नि त्रिकोण अर्थात् नवत्रिकोणात्मक है।' यद्यपि सुन्दरीश्लोक में 'मण्डल' पद की व्याख्या दशकोण आदि चक्र अर्थ में भी आचार्यों ने की है। श्रीचक्र में बिन्दु से लेकर चतुर्दशकोण पर्यन्त मण्डलों की संख्या छः है तथापि उन सभी की एक अवयव के रूप में भावना करने से मन्त्र में 'एकम्' एकवचनान्त पद का प्रयोग है। 'द्वा मण्डला' से अष्टदलपद्म और षोडशदलपद्म का प्रतिपादन है, इस बात को कहते हैं— **द्वा मण्डलेति।** तीन (मुख, स्तन और 'गुहा' पद से योनि) अवयवों का कथन सारे

अवयवों का उपलक्षण है अर्थात् तीन अवयवों के द्वारा सारे अवयवों का प्रतिपादन है, इस वस्तु को प्रकट करते हैं—**इदमवयवत्रयकथनम्।** शरीर में भी तीन अवयवों की व्यवस्था कहते हैं—**वस्तुतस्तु।** शरीर में भी तीन ही अवयव होते हैं—मस्तक से लेकर घण्टिकापर्यन्त पहला, कण्ठ से स्तनपर्यन्त दूसरा तथा हृदय से सीवनीपर्यन्त तीसरा। केश, चरण, हस्त आदि उन-उन अङ्गों की शाखायें हैं। एवञ्च, मन्त्र में पूर्वार्ध से कामकला को सर्व चक्र के रूप में परिणत माना गया है। पञ्चाशत् मातृका के रूप में और मुखादि अवयवों से उपलक्षित नारी के रूप में भी काम = कामेश्वर की कला विमर्शशक्ति का प्रतिपादन है जिसके ध्यान से पूर्वोक्त फल की प्राप्ति होती है। प्रकृत मन्त्रवर्ण से विधि का उन्नयन करते हैं— **कामरूपत्वकाम्यत्वकामः।** काम के समान रूप और वनिताओं की अभिलषणीयता की कामना करने वाला कामकला का ध्यान करे, इस तरह से यह गुणफलसम्बन्ध का विधान है। 'दध्नेन्द्रियकामस्य जुहुयात्' में जैसे इन्द्रिय (पुष्टि) फल के साथ दधि गुण का सम्बन्ध होने पर सन्निधान में स्थित होम आश्रय के रूप में सम्बन्धित होता है, क्योंकि आश्रय के विना सिद्ध दधि आदि गुण स्वतः फल का निष्पादक नहीं होता। इसी तरह यहाँ भी कामरूपत्वादि फल के लिए विधीयमान कामकलाध्यान रूप गुण का कोई आश्रय होना चाहिये? इस आशङ्का का समाधान करते हैं—**अत्र फलार्थतया विधेयस्य ध्यानस्य।** यहाँ कामरूपत्वादि फल के लिए विहित होने वाला ध्यान स्वतः क्रियारूप होने से फल का निष्पादक हो जायेगा, अतः अन्य किसी याग आदि आश्रय की यहाँ अपेक्षा नहीं है। अतः बहिर्याग से बाहर स्वतन्त्ररूप से कामकला का ध्यान फल का साधन होने से पुरुषार्थरूप धर्म माना जायेगा। इसमें उपोद्वलक हेतु है—**श्येनक्रत्वादेः सौमिकाङ्गसंवलितत्वस्येव बहिर्यागसंवलितत्वस्याप्यभावेन।**

हिंसा फल के लिए 'श्येनेनाभिचरन् यजेत' वाक्य से विहित श्येनयाग अव्यक्त होने के कारण ज्योतिष्टोमनामक सोमयाग का विकार है, अतः उसमें सोमसम्बन्धी अङ्गों की अपेक्षा होती है। श्येनयाग सोमसम्बन्धी अङ्गों से संवलित (युक्त) रहता है। इस तरह यहाँ पर बहिर्याग और कामकलाध्यान की सापेक्षता नहीं है, अतः यह कामकलाध्यान बहिर्याग के बाहर स्वतन्त्ररूप से फल के लिए विहित है।

कामकलाध्यान के क्रत्वर्थत्व की आशङ्का करते हैं—

**'बिन्दुं संकल्प्य वक्त्रन्तु तदधःस्थं कुचद्वयम् ।**
**तदधःस्थं सपरार्धन्तु चिन्तयेत् तदधोमुखम् ।।'**

'यहाँ भी कामकला = चित्कला का ध्यान प्रतिपादित है। सौन्दर्यलहरी में हरार्ध या कहीं पर हकारार्ध पाठ है। **हरः हकारश्च शिवोऽर्धनारीश्वरस्तस्यार्धं योनिः।** दोनों का योनि अर्थ है। सपरार्ध का भी यही अर्थ है—**सकारात् परो हकारः शिवस्तस्यार्धमिति।** एवम् बिन्दु के स्थान पर मुख, मुख के नीचे स्तनयुगल और स्तनयुगल के नीचे योनि का ध्यान करना चाहिये।

नित्याषोडशिकार्णव के यागीय प्रकरण में विधान होने के कारण कामकला का ध्यान

क्रत्वर्थ = याग का अङ्ग सिद्ध हो रहा है। क्रत्वर्थ होने से इसका फलकथन पूर्वोक्त न्याय से प्रशंसापरक ही होगा। स्वतन्त्र कामरूपत्वादि फल नहीं होगा, यह आशङ्का का अभिप्राय है। स्वीकार करके पुरुषार्थत्व की भी स्थापना करते हैं—**किन्तावता**। अन्नाद्य आदि फलों की कामना होने पर 'अवेष्टि' के समान प्राकरणिक याग के बाहर भी स्वतन्त्र कामरूपत्वादि फल के लिए कामकलाध्यान का प्रयोग हो सकता है। इसमें किसी प्रकार की बाधा नहीं है। अयम्भावः—

स्वाराज्य फल के लिए विहित राजसूय यज्ञ इष्टि, पशु और सोमयागों का समुदाय है। इस यज्ञ का अधिकारी क्षत्रिय है। इसके अङ्ग के रूप में 'अवेष्टि' नामक यज्ञों का विधान है—**दिशामवेष्टयो भवन्ति। आग्नेयोऽष्टाकपालः, ऐन्द्र एकादशकपालः, वैश्वदेवश्चरुः, मैत्रावरुण्या-मिक्षा, बार्हस्पत्यश्चरुः**। पाँच हवियों से विहित अवेष्टि राजसूय का अङ्ग है जो केवल क्षत्रिय के लिए विहित है। राजसूय के अवान्तरप्रकरण में इन वाक्यों का श्रवण है—'**यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेद् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवम्**'।

यदि ब्राह्मण यज्ञ करे तो पाँचों हवियों का वेदी पर आसादन (स्थापन) इस तरह से होगा कि पाँचवे स्थान में पठित बार्हस्पत्य चरु तृतीय स्थान में हो। फिर चार हवियों का क्रमशः आहवनीय अग्नि में प्रक्षेप करके इन हवियों के संस्कार में उपयुक्त आज्य को जूहू पात्र में लेकर मध्य में आसादित बार्हस्पत्य हवि का आघारण करके अन्त में होम हो। इसी तरह अन्य में भी समझना चाहिये। यहाँ ब्राह्मण आदि कर्ता के बल से यह निश्चित होता है कि पाँच हवियों वाले इस 'अवेष्टि' नामक याग का एक प्रयोग 'अन्नाद्य' फल के लिए विहित है जिसका राजसूय से कोई सम्बन्ध नहीं है। क्षत्रियकर्तृक होने से राजसूय में ब्राह्मण और वैश्य की प्राप्ति ही नहीं है। राजसूय में फलसम्बन्ध के कारण अलग-अलग पाँच प्रयोग हैं। इसी तरह कामकलाध्यान को भी बहिर्याग के बाहर भी विशेष फल के लिए समझना चाहिये। इसमें उपोद्वलक दृष्टान्त प्रस्तुत करते हैं— **अत एव**। इसीलिए भगवान् के स्मरण का प्रारम्भ करके भक्तिसूत्र में कहा है—'**बहिरन्तस्तदुभयमवेष्टिवत् सर्वम्**'। अर्थात् श्रीभगवत्स्मरण अवेष्टि के समान ही आराधना के भीतर और बाहर स्वतन्त्ररूप से होना चाहिये। आराधना में वह इसका उपकारी होगा तथा बाहर विशेष फल के लिए पुरुषार्थ (धर्म) होगा॥११॥

## श्रीत्रिपुरोपनिषद्

**परिस्रुतं झषमाद्यं पलञ्च भक्तानि योनीस्सुपरिष्कृतानि ।**
**निवेदयन् देवतायै महत्यै स्वात्मीकृत्य सुकृती सिद्धिमेति ।।१२।।**

**श्रीरामानन्दतीर्थकृतभाष्यम्—**

परिस्रुतं द्रवद्रव्यं मधु। झषं मत्स्यम्। आद्यम् अत्तुं योग्यम्। किं तत्?

पलम् आमिषम्। चकारः समुच्चयवाचकः। भक्तानि अन्नानि। योनिः त्रिकोणम्। तेन तद्वती सुन्दरी लक्ष्यते। एते द्रवद्रव्यविशेषाः सुपरिष्कृताः यथार्हं सुसंस्कृताः, योनिं सुपरिष्कृतामित्यर्थः। पदद्वयस्य विभक्तिव्यत्ययश्छान्दसः। चकारो ह्यनुक्तमुख्यानि समुच्चिनोति। निवेदयन् निवेदनं कुर्वन्। कस्यै? देवतायै द्योतनस्वभावायै, 'तेजः परस्यां देवतायामि'ति श्रुतेः। महत्यै पूज्यायै। 'मह पूजायामि'ति धातुः। तथा चाऽगस्त्यः—'सर्वपूज्या त्वया प्रोक्ता त्रिपुरा परदेवते'ति। स्वात्मीकृते स्वात्मसात्कृते। सुकृते पूजारूपे धर्मविशेषे।

**'ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माऽग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ।।'**

इति बुद्धौ सत्यां सिद्धिमेति पुरश्चरणसिद्धिं प्राप्नोति। अत्र 'परिस्रुतं द्रवद्रव्यमि'ति निघण्ट्वादिप्रसिद्धिः। अत एव वाजपेयादिप्रसिद्धक्रतुष्वपि परमेश्वर्या मन्त्रनायिकायाः विहितत्वादेव निषिद्धस्यापि द्रव्यस्य स्वीकारो दरीदृश्यते। यथोक्तं ललितोपाख्याने—

**'परितुष्टास्मि मद्याब्धे त्वया साह्यमनुत्तमम् ।**
**देवकार्यमिदं किञ्चित् त्वया निर्विघ्नितं कृतम् ।।**

**इतः परं मत्प्रसादाद् वाजपेयादिके मखे ।**
**सोमपानवदत्यन्तमुपयोज्यो भविष्यसि ।।**

**यागेषु मन्त्रपूतं त्वां पास्यन्त्यखिलदेवताः ।**
**यागेन मन्त्रपूतेन पीतेन भवता जनाः ।।**

**सिद्धिमृद्धिं धनं स्वर्गमपवर्गं च गच्छतु ।**
**महेश्वरी महादेवः बलभद्रश्च भार्गवः ।।**

**दत्तात्रेयो विधिर्विष्णुस्त्वां पास्यन्ति महाजनाः ।'** इति।

परशिवोऽपि—

**'कुण्डिकम्बुकपालानि मधुपूर्णानि बिभ्रतीम् ।**
**त्रीणि पश्यति लोकोऽयं तव मायाविमूढधीः ।।'**

**पूजासङ्केतके प्रधानादिवरिवस्यां निवर्तयेत् ।**

इत्याह। यथा वा—

**'महापद्मवनान्तःस्थे करणानन्दविग्रहे ।**
**मदङ्कोपाश्रयां देवीमिच्छाकामफलप्रदाम् ।**

**भवतीं त्वन्मयैरेव नैवेद्यादिभिरर्चयेत् ।'**

इत्यादिनोक्ता। अन्ते नैवद्यद्रव्यं स्पष्टमाचष्टे। यथा वा—

**'अलिना पिशितैर्गन्धैर्धूपैराराध्यदेवताम् ।**
**चक्रपूजां विधायेत्थं कुलदीपं निवेदयेत् ।**
**कौलिकाचारसंयुक्तैर् वीरैस्तु सह पूजयेत् ।।'**

अन्यत्र रहस्यागमेऽपि स एव परमेश्वरो मकारादिपदार्थपञ्चकस्य देवतायोगविनियोगमाह—

**'मादिपञ्चकमीशानि! देवताप्रीतिकारकमि'**ति।

ननु शिव एव सर्वतन्त्रप्रवर्तक' इत्युक्तम्। तथा च महामायाशाम्भवाद्यनेकतन्त्रानुष्ठानप्रसङ्गः, तदुक्तत्वाविशेषात् इति चेत्, न, तेनैव तत्तदधिकारिभेदेनाऽनुष्ठेयानीमानि तन्त्राणीति व्यवस्था कृता। इदं शाम्भवं तन्त्रं मुमुक्षूणामेवोपास्यमिति प्रपञ्चितम्। यथा—

**'नाना शास्त्राणि देवेशि! मयैव कथितानि वै ।**
**मूर्त्यन्तरं तु गत्वैव मोहनाय दुरात्मनाम् ।।'**

इत्युक्त्वा—

**'मथित्वा ज्ञानमन्थेन वेदागममहार्णवम् ।**
**सारज्ञेन मया देवि! कुलधर्मः समुद्धृतः ।।**

**मेरुसर्षपयोर्यद्वत् सूर्यखद्योतयोरिव ।**
**तथाऽन्यसमयस्याऽम्ब! कुलस्य महदन्तरम् ।।'**

इत्यादिना कुलधर्मस्वरूपमभिधाय तन्निष्ठस्यैव मोक्षो, नान्यनिष्ठस्येत्यत्याह—**'एतत् ज्ञात्वा वरारोहे! सद्यः खेचरतां व्रजेत्'** इति। मुख्यद्रव्याभावे अनुकल्पेन वा अवश्यं कर्तव्यम्। तथा च लोपामुद्रासंहितायां पञ्चमोल्लासे देवीं प्रति शिववचनम्—

**'सुरां निवेदयेद् भक्त्या मुख्याभावेऽनुकल्पतः ।**
**द्रव्याणां क्षीरमुख्याणामपस्ताम्रादिपात्रके ।।**

**अनुकल्प इति प्रोक्तः पदार्थैर्लवणादिभिः ।**
**अस्माकमनुकल्पोऽयं सम्मतोऽतीव वल्लभे ।।**

**अनुकल्पे कृते सम्यक् शास्त्रोक्तं च कृतं भवेत् ।**
**शिष्टाचारोऽनुकल्पेषु सौत्रामण्यां तथा खलु ।**
**मांसानुकल्पोऽपूपः स्यात् मत्स्यस्य तु कदल्यपि ।।**

मैथुनं स्वकलत्रेषु तदभावे तु यत्नतः ।
एवं तन्त्रेषु शक्तीनामनुकल्पः समीरितः ।।

मद्यं मत्स्यं च मांसं च मुद्रां मैथुनमेव च ।
मकारपञ्चकं देवि! एतत् ज्ञात्वा समारभेत् ।।' इति।

महालक्ष्मीतन्त्रेऽपि दशरथं प्रति वसिष्ठवचनम्—

'मनुवंश्य महाराज! रहस्यं कथयामि ते ।
अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।।

एताः पुण्यतमाः प्रोक्ताः पुरीणामुत्तमोत्तमाः ।
अस्याः सान्निध्यमात्रेण महात्रिपुरसुन्दरीम् ।।

अर्चय त्वमयोध्यायाममुष्या आधिदेवताम् ।
नैतस्याः सदृशी काचिद् देवता विद्यतेऽपरा ।।

नारिकेलीफलालीभिः पक्वैश्च कदलीफलैः ।।

मध्वाज्यशर्कराप्राज्यैः महापायसराशिभिः ।
सिद्धद्रव्यविशेषैश्च पूजयेत् त्रिपुराम्बिकाम् ।।

अभीष्टमचिरेणैव सम्प्रदास्यति सैव ते ।।' इति।

तत्रैव—

'सितामध्वाज्यकदलीफलपायसरूपकम् ।
पञ्चपर्वसु नैवेद्यं सर्वथैव निवेदयेत् ।।

यो नार्ऽचयति शक्तोऽपि स देवीशापमाप्नुयात् ।
अशक्तो भावनाद्रव्यैरर्चयेन्नित्यमम्बिकाम् ।।' इति।

एवं कौलपूजा प्रत्यपादि। समयिनां बाह्यपूजाभावेऽपि भावनाद्रव्यैरान्तरपूजा सम्यक् कर्तव्यैव। तथा चोक्तं कुलार्णवे पञ्चमविलासे—

'आमूलाधारमाब्रह्मरन्ध्रं गत्वा पुनः पुनः ।
चिच्चन्द्रकुण्डली-शक्ति-सामरस्य-सुखोदयात् ।।

व्योमपङ्कजनिष्पन्द-सुधापानरतो भवेत् ।
मधुपानमिदं प्रोक्तमपरे मद्यपायिनः ।।

पुण्याऽपुण्यपशुं हुत्वा ज्ञानखड्गेन योगवित् ।
परे लये नयेच्चित्तं पलाशी स निगद्यते ।।

मनसा चेन्द्रियगणं सम्यगात्मनि योजयेत् ।
मद्याशी स भवेद् देवि! शेषाः स्युः प्राणिहिंसकाः ।।

अप्रबुद्धां पशोः शक्तिं प्रबुद्धां कौलिकस्य च ।
शक्तिं तां सेवयेद् यस्तु स भवेच्छक्तिसेवकः ।।

पराशक्त्याऽऽत्ममिथुनसंयोगानन्दनिर्भरः ।
योऽस्ति मैथुनं तत् स्यादपरे स्त्रीनिषेवकाः ।।

इत्यादि पञ्चमुद्राणां कथितं कुलनायिके! ।।' इति।

अतः समयिनां बाह्यपूजाया निषिद्धत्वात् अन्तरेव पूजा कर्त्तव्या। तदर्थं च बहिः पूजायामण्डप्रपञ्चवत् अन्तः पूजायां पिण्डप्रपञ्चो निरूपणीयः। तथाहि सुभगोदये कौलशिक्षापटले—

'बाह्यपूजारताः केचित् पाखण्डा वेदनिन्दकाः ।
कौलाः कापालिका मूलमागमैरविधानतः ।।

निषिद्धाचरणात् पातस्तेषामिति हि मे मतिः ।
तस्मात् पीठार्चनादीनि वैदिकानां न विद्यते ।।

अन्तःपूजारताः सन्तो वसिष्ठसनकादयः ।
वाञ्छितां सिद्धिमापन्नास्तस्मादधिकमान्तरम् ।।

अथ चेत् कर्षणादीनि प्रतिष्ठान्तानि चागमैः ।
अथार्वणैरथोक्तानि बाधितार्थानि तानि किम्? ।।

सम्यक् तानि तथोक्तानि स्वाधिकारानुगुण्यतः ।
मुमुक्षूणां न तत्रास्ति किंपूजायामधिक्रिया ।।

तस्मात् समयिनामन्तश्चक्रेष्वेवार्चनादिकम् ।
तच्चाधारविशुद्ध्यैवं सा च वायुनिरोधतः ।।'

तथा च आधारादिष्वपि पूजायां फलविशेषश्रवणाद् विशिष्याऽन्तः-प्रपञ्चो निरूपणीयो भवति। तथाहि समयिनां मते आधारादिषट्चक्रभजनमेव श्रीचक्रपूजनम्। उक्तं चैतद् वामकेश्वरतन्त्रे—

'चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैश्च संसिद्धिं श्रीचक्रं शिवयोर्वपुः ।।

त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च ।।

बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम् ।
चतुरस्त्रं च चत्वारि शिवचक्राण्यनुक्रमात् ।।

त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ।
दशारयोः षोडशारं भूगृहं भुवनास्त्रके ।।

शैवानामपि शाक्तीनां चक्राणां च परस्परम् ।
अविनाभावसम्बन्धं यो जानाति स चक्रवित् ।।

त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
मनुकोणं चतुष्कोणं कोणचक्राणि षट् क्रमात् ।।

मूलाधारं तथा स्वाधिष्ठानं च मणिपूरकम् ।
अनाहतं विशुद्धाख्यमाज्ञाचक्रं विदुर्बुधाः ।।

तवाऽऽधारस्वरूपाणि कोणचक्राणि पार्वति! ।
त्रिकोणरूपिणी शक्तिः बिन्दुरूपः शिवः स्मृतः ।।

अविनाभावसम्बन्धस्तस्माद् बिन्दुत्रिकोणयोः ।' इति।

तत्र आधारपद्मं चतुर्दलम्, स्वाधिष्ठानपद्मं षड्दलम्। इदं चक्रद्वयं वह्निमण्डलं रुद्रग्रन्थियुक्तं तमोलोक इति चोच्यते। अत्रोपासनायां तामसानि ऐहिकानि ऐश्वर्यादीनि भवन्ति। मणिपूरपद्मं दशदलम्, अनाहतपद्मं द्वादशदलम्। इदंद्वयं सूर्यमण्डलं विष्णुग्रन्थियुक्तं 'रजोलोक' इत्युच्यते। तत्रोपासनायां सार्ष्टिनामदेवीनगराद् बहिरुद्यानादिष्ववस्थानम् समानलोकतानामदेवीनगरान्तरवस्थानमिति विवेकः। विशुद्धिपद्मं षोडशदलम्, आज्ञाचक्रं द्विदलम्। इदंद्वयं सोममण्डलं ब्रह्मग्रन्थियुक्तं 'सत्यलोक' इति चोच्यते। अत्रोपासनायां सामीप्यसारूप्यमुक्ती भवतः। सामीप्यं नाम समीपेऽवस्थानम्। सारूप्यं नाम समानरूपत्वं समानभोग्यभोक्तृत्वमिति यावत्। ध्रुवमण्डलं पद्मं सहस्रदलम्। सर्वग्रन्थिसर्वतत्त्वसर्वगुणाद्यतीतं 'सर्वलोक' इति चोच्यते। तत्रोपासनायां सायुज्यमुक्तिर्भवति। सायुज्यं नाम तत्त्वस्वरूपापत्तिः। तदुक्तमानन्दकन्दे—

'आत्मा विशुद्धिपद्मे द्विषोडशारे च सत्त्वगुणयुक्ते ।
ब्रह्मग्रन्थिसमेते विख्याते सोममण्डलाभिख्ये ।।

अनाहते मणिपूरे पद्मे दशद्वादशच्छदे रजसाम् ।
विष्णुग्रन्थिसमेते विज्ञेये मण्डले भानोः ।।

स्वाधिष्ठानाधारे पद्मे तमसां सषट्चतुष्पत्रे ।
रुद्रग्रन्थिनिबद्धे त्वैहिकफलदेऽग्निमण्डले विदुषाम् ।।

तत्त्वगणमण्डलानामुपरि सरोजं सहस्त्रदलयुक्तम् ।
अमृतस्यन्दि सुधाकरलोकस्थं सूर्यकोटिसच्छायम् ।।
श्रीचक्राख्यं देव्या मन्दिरमिति तत्र विश्रुतं श्रुतिषु ।
इष्ट्वा तत्र महेशीमैक्यं देव्या हि याति मुनिलोकः ।।'

इति तेषां स्वरूपे निरूपितेऽपि तत्र भजनप्रकारो विविच्यते। शिवचक्रात्मक-बिन्दुयुक्तत्रिकोणात्मकमूलाधारे ताण्डवपरं भैरवं लास्यपरां समयां च, अष्टदलपद्मात्मकाऽष्टकोणस्वरूपस्वाधिष्ठानसंवर्तनानलात्मकं रुद्रं लोकानुग्राहिकां समयां च, षोडशदलपद्मात्मकद्विदशारस्वरूपयोर्मणिपूरानाहतयोः प्रावृट्काल-पयोदरुचिं पराभिधशिवं तडिद्रूपां परात्मिकामम्बां च, हंसाकारशिवचक्रभूपुर-त्रयात्मकचतुर्दशाररूपयोः विशुद्ध्याज्ञाचक्रयोः क्रमेण सदाशिवसदाशिवाख्यां च परचितायुतं परं शम्भुं च शुद्धेन्दुकोटितुलितम्, चन्द्रलोके सहस्रारे पद्मे सुधाप्लुतां सादाख्यां च परां शक्तिं परशिवाभिन्नां सर्वतत्त्वातीतां चिन्तयेत्।

ननु षोडशोपचारा एव पूजायां प्रसिद्धाः। तत् कथं देव्याश्चतुष्षष्ट्युपचारा इत्युच्यते? इति चेन्न, अन्यासां देवतानां तथा देव्यास्तु चतुर्गुणितानि तानि सन्तीत्यागमरहस्यम्। तथाहि—आवाहनाऽऽसन-प्रतिष्ठापन-सन्निधापन-सम्मुखीकरणपरिवारदनानुपार्थनाऽभिमुखीकरण-सफलीकरणाऽनुवरणसंयोजन-पाद्याऽऽर्घ्याऽऽचमनश्रमापनयनस्नानमण्डप-नयन-शेषगन्धमाल्यापनयनभूषणाव-रोपणशरीरोद्वर्तनदन्तधावनताम्बूलकरणवस्त्रान्तरपरिधापनाऽभ्यङ्गस्नानीय-घारणस्नापनशिरोवस्त्रबन्धनशरीरमलापकर्षणयक्षकर्दमानुलेपनकुङ्कुमविलेपन-जलकणिकापनोदनदिव्यवस्त्रान्तरपरिधापनपुनःसमानयनसिंहासनाधिरोपण-केश्यालीकरणकालागरुधूपनगर्भकग्रथनघम्मि(ल्ल)करणस्रग्गन्धसिन्दूर-धारणचन्द्रविकलाबन्धनतिलकसन्धारणमलयजानुलेपनपादाङ्गुलीयकमञ्जीरकाञ्चीक-लापोर्ध्वाणबन्धनकराङ्गुलीयककटककङ्कणाङ्गदकेयूरहारावलीग्रैवेयकताटङ्कपाली-ललन्तिकाद्याभरणधारणकज्जललाक्षादिधारणमकरीविलेखनयज्ञोपवीतधारण-व्यजनसेवनाऽनेकभक्ष्यफलोपेतनैवेद्यप्रदानहस्तावनेजनताम्बूलप्रदानदर्पणाव-लोकनच्छत्रधारणबालव्यजनवीजनगीतवादित्रादिश्रवणप्रदक्षिणनमस्कारस्तुति-प्रार्थनाकरणरङ्गवल्लीदीपाद्यवलोकनकर्पूरवीटीप्रदानमञ्चाधिरोहणतिरस्करिणी-प्रदानरूपात्मकचतुष्षष्ट्युपचारा' इति।

ननु पूर्वं सहस्रकमले पूजकानामेव मुक्तिरित्युक्तम्, इदानीम् अनाहतादि-चतुष्टयेषु स्थानेषु आराधकानां सायुज्यमस्तीति प्रतिपाद्यते, तत् कथमिति

चेत्? सत्यम्, चक्रमात्रेष्वाराधकानां फलं प्रदर्शितम्, इदानीं समयिनाम्, आधारस्वाधिष्ठानचक्रयोर्लोकत्वात्, तत्र देव्याः सान्निध्याभावात् तदितरचक्रेषु सर्वेष्वपि आराधनस्य फलमुच्यते इति न विरोधः।

नन्वेवं पूर्वमाधारस्वाधिष्ठानचक्रयोरपि ताण्डवसंवर्तनमूलरुद्रलास्य-परलोकाऽनुग्रहकामशिवशक्तीनामुपासनोक्ता, इदानीं तत्र देव्याः सान्निध्यमेव नास्तीति कथमुच्यत इति चेत्? तत् पूर्वकौलमतानुसारेणोक्तम्, तेषामाधार-स्वाधिष्ठानयोरेवोपासकत्वात्। **अत एव कुलनिष्ठाः कौला इति प्रसिद्धिः। कुलमित्याधारस्य नाम।** अत एव आचार्यैः सौन्दर्यलहर्याम्-

**'अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं**
**स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि'** इत्युक्तम् ।।

चतुर्विधैक्यानुसन्धानप्रकारस्तु आधारादिषट्चक्रस्य प्रथममैक्यमनु-सन्धातव्यम्। तत्प्रकारः पूर्वमेव प्रतिपादितोऽपि विस्पष्टार्थः पुनरप्युच्यते। मूलाधारादिषट्चक्राणां त्रिकोणाऽष्टकोणदशारद्वयमन्वश्रशिवचक्रात्मना तादात्म्यं ज्ञेयम्। एतदेव नादबिन्दोरैक्यम्। तथाहि—**नादो नाम श्रीचक्रम्, बिन्दुर्नाम षट्कमलगहनं वक्ष्यते।** तयोरैक्यं नाम आधारचक्रं चतुर्दलम्, तत्कर्णिका त्रिकोणात्मिकैव। स्वाधिष्ठानं षड्दलम्, तत्कर्णिका अष्टकोणात्मिका, मणिपूरं दशदलं पद्मम् तत्कर्णिका दशकोणात्मिका। अनाहतं द्वादशदलम्, तत्कर्णिका द्वितीयदशकोणात्मिका। विशुद्धिचक्रं षोडशदलं पद्मम्, तत्कर्णिका चतुर्दश-कोणात्मिका। एतावत्पर्यन्तं शिवशक्तिचक्रैक्यम्। आज्ञाचक्रं द्विदलं पद्मम्, अष्टकोणमेकत्र षोडशकोणमपरत्रेति द्विधा भिन्ना कर्णिका।

**'शिवचक्रेण चाद्यस्य बिन्दुना मध्यमस्य च ।**
**शक्तिचक्रेण चान्त्यस्य मन्त्रखण्डस्य यो बुधः ।।**
**अविनाभावसम्बन्धं यो जानाति स मुक्तिभाक् ।।'** इति।

यद्वा—त्रिरेखा-त्रिवलय-षोडशाराऽष्टदल-चतुर्दशार-दशारद्वय-वसुकोण-चतुरस्रबिन्दुषु यथाक्रमं पञ्चदशाक्षरात्मकत्वमनुसन्धेयम्। तदुक्तं सनत्कुमार-संहितायां चतुर्विधैक्यानुसन्धानम्—

**'चतुरस्रं त्रिरेखा च वलयत्रितयं तथा ।**
**षोडशारं नागदलं मन्वश्रं द्विदशारकम् ।।**
**वसुकोणं त्रिकोणं च चतुष्कोणं तदन्तरे ।**
**बिन्दुश्चेतैः पञ्चदशाक्षरीवर्णाननुक्रमात् ।।**

**योजयित्वा जपेद् यस्तु साधकः स तु मुक्तिभाक् ।' इति।**

अथ तृतीयं चक्रदेवतयोरनुसन्धानम्। तथाहि—चक्रपञ्चकं देव्याः शिरः-केशपाशस्रङ्मुकुटचन्द्रकलारूपम्।

**'शक्तिचक्राणि पञ्चापि क्रमाद् देव्या निबोधत ।**
**शिरः केशश्च दामानि किरीटं चन्द्ररेखिका ।।'**

बिन्दुर्मुखं चतुरस्रं कम्बुकण्ठः शिवचक्रचतुष्टयं बाहु-वक्षोज-जघन-पादरूपम्।

**'शिवचक्राणि चत्वारि बाहवो जघनाङ्घ्रिकम् ।**
**बिन्दू रदनमाख्यातं चतुरस्रं तु कन्धरम् ।।**
**इति यो वेद तत्वज्ञः स देवीत्वं प्रपद्यते ।' इति।**

तुरीयं मन्त्रदेवतयोरैक्यानुसन्धानम्। प्रथमखण्डो देव्या मुखम्, द्वितीयखण्डो कट्या ऊर्ध्वप्रदेशः, तृतीयखण्डः कट्या अधः प्रदेशः। तदुक्तं वसिष्ठसंहितायाम्—

**'खण्डत्रयेषु मन्त्रस्य देव्या वदनपङ्कजम् ।**
**प्रथमस्तु द्वितीयस्स्यात् कटेरूर्ध्वं तथाऽन्तिमः ।।**
**कट्यधोभाग इत्येवं जानीयात् साधकोत्तमः ।' इति।**

रहस्य सहस्रनामस्तोत्रे च मन्त्रदैवतयोरैक्यं प्रतिपादितम्। यथा वा—

**'श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजा ।**
**कण्ठाधःकटिपर्यन्तमध्यकूटस्वरूपिणी ।।**
**शक्तिकूटैकतापन्नकट्यधोभागधारिणी ।।' इति।**

अयमर्थः—श्रीः चित्कला अस्या अस्तीति 'श्रीमत्', नित्ययोगे मतुप् प्रत्ययः। भवत्यस्मादिति भवम्, वाचां भवं 'वाग्भवम्'। सर्वासां वाचां वाग्भवकूटादेवोत्पत्तेः।

तत् श्रीमद् वाग्भवकूटमिच्छाशक्तिसमधिष्ठितं पञ्चबीजसमुदायात्मक-लक्षणं स्वरूपम् अस्यास्तीति। नित्ययोगे मत्वर्थीयः प्रत्ययः। राजतेर्दीप्त्यर्थत्वात् कामानां राजा कामराजः। 'राजाहःसखिभ्यष्टजि'ति समासान्तष्टच्। श्रीक्रोधभट्टारकस्तु "कामान् राजयतीति कामराजः', पचाद्यच् इत्याह। तथाहि—

**'कामान् कारणतां गतानगणितान् कार्यैरनन्तैर्मही-**
**मुख्यैः सर्वमनोगतैरधिगतान् मानैरनेकैः स्फुटम् ।**
**काम-क्रोध-सुलोभ-मोह-मद-मात्सर्यादिषट्कं च यद्**
**बीजं राजयति प्रणौमि सततं ते साधु कामेश्वरि!।।' इति।**

अत्र प्रकारान्तरेण केचित् चतुर्विधैक्यानुसन्धानं वर्णयन्ति। यथा—

**'पिण्डब्रह्माण्डयोरैक्यं लिङ्गसूत्रात्मनोरपि ।**
**स्वापाऽव्याकृतयोरैक्यं क्षेत्रज्ञपरमात्मनोः ।।'** इति।

पिण्डब्रह्माण्डयोरैक्यं प्रथममवगन्तव्यम्, तदनन्तरं लिङ्गसूत्रात्मनोरैक्यमवगन्तव्यम्। लिङ्गात्मा लिङ्गशरीरम्, **एकादशेन्द्रियगणः, तन्मात्रापञ्चकं षोडशकं लिङ्गशरीरम्।** सूत्रात्मा ब्रह्माण्डावच्छिन्नो वायुः, व(?) लिङ्गशरीरस्याऽर्चिरादिमागप्रापकः। तयोरैक्यमवगन्तव्यम्। स्वापाऽव्याकृतयोः-स्वापः सुषुप्त्यवस्थापन्नः साक्षी प्राज्ञः, अव्याकृतः अविद्याशबलितं ब्रह्म, तयोरैक्यम्। क्षेत्रज्ञो जीवः, परमात्मा = ब्रह्मस्वरूपम्, तयोरैक्यं ज्ञातव्यम्। एवं समयसम्प्रदायरहस्यसङ्क्षेपः। विस्तरस्तु सुभगोदये शारीरके ज्ञातव्यः।

केचित् पञ्चविधैक्यानुसन्धानमिति वर्णयन्ति। अपरे षड्विधैक्यानुसन्धानमावश्यकमिति वदन्ति। तदुभयमपि अत्रैवार्थादन्तर्भूतमिति न विचारणीयम्। अन्त एवोक्तमाचार्यैः सुभगोदये—

**''चतुर्थैक्यानुसन्धानान्मणिपूरे महेश्वरीम् ।**
**चतुर्बाहुं त्रिनेत्रां च प्रत्यक्षीकुरुते वशी ।।'** इति।

षड्विधैक्यानुसन्धानं नादबिन्दुकलाविद्यानां परस्परैक्यम्। **नादो नाम श्रीचक्रम्। बिन्दुर्नाम षड् आधारकमलानि। कला नाम पञ्चाशद् वर्णाः। विद्या पञ्चदशाक्षरी। एतेषां तादात्म्यमैक्यम्।** तत् षड्विधं भवन्ति। यथा-नादेन बिन्दोरैक्यम्, बिन्दुना कलाया ऐक्यम्, कलायाश्च नादेनैक्यम्, एवं त्रितयम्। कलायाश्च बिन्दोरैक्यम्, कलाया नादस्यैक्यम्, श्रीविद्याया पञ्चकस्यैक्यमिति षड्विधत्वमैक्यस्येति परमरहस्यं गुरूपदेशवशाद् ज्ञेयम्। एवं षोढैक्यं भगवत्याः सपर्येति विज्ञेयम्।

एवं षड्विधैक्यानुसन्धानमहिम्ना गुरुकटाक्षसञ्जातमहामहिम्ना च भगवती झटिति मूलाधार-स्वाधिष्ठानात्मकचक्रद्वयं भित्त्वा मणिपूरे प्रत्यक्षं प्रतिभाति। महावेधप्रकारः—पूर्वमभ्यासदशायां गुर्वेकपरतन्त्रमहाविद्यां गुरुमुखादेव स्वीकृत्य ऋषिच्छन्दोदेवतापूर्वं मूलमन्त्रस्य शुष्कजपं गुरूपदिष्टमार्गेण कुर्वन् आश्वयुजशुक्लपक्षे महानवमीशब्दाभिधेयाऽष्टम्यां निशि समये गुरोः पादोपसङ्ग्रहणं कर्तव्यम्। तन्महिम्ना गुरोस्तदानीं कर्तव्यहस्तमस्तकसंयोगे पुनर्मन्त्रोपदेशषट्चक्रपूजा-प्रकारोपदेशवशाद् महावेधः शैवः सादाख्यायाः प्रकाशरूपो जायते इति गुरुरहस्यम्।

एवं महावेधे जाते भगवती मणिपूरे प्रत्यक्षा भवति। सा समाराध्या।

अर्घ्यपाद्यादिभूषणप्रतिपादनपर्यन्तं पूजाकलापं मणिपूरे निर्वर्त्य अनाहतमन्दिरं भगवतीं नीत्वा धूपादिनैवेद्यहस्तप्रक्षालनान्तं कर्मकलापं तत्रैव समाप्य विशुद्धौ भगवतीं सिंहासनासीनां सखीभिः संल्लापान् सम्भाषमाणां शुद्धस्फटिकसदृशीं मणिभिः सम्पूजयेत्। शुद्धस्फटिकसदृशमणयो न मौक्तिकादयः, किन्तु तदीयषोडशदलगतषोडशचन्द्रकला इति रहस्यम्। एवं सम्पूज्य आज्ञाचक्रं नीत्वा देवीं कामेश्वरीं नीराजनादिभिरनेकैरुपचारैः सम्पूजयेत्। तदनन्तरं झटिति विद्युल्लतेव सहस्रकमलमनुप्रविश्य सुधाब्धौ पञ्चकल्पतरुच्छायायां मणिद्वीपे सरघामध्ये कामेश्वरेण सार्द्धं विहरमाणा वर्तते। तदा तिरस्करिणीं प्रसार्य समीपमन्दिरे स्वयं निवसेत्। यावत् भगवती पुनर्निर्गता पुनर्मूलाधारकुण्डं प्रविशति, तावत्पर्यन्तं स्थातव्यमिति षड्विधैक्यानुसन्धायिनां समयिनां मतरहस्यम्। श्रीचक्रे त्रिकोणं बैन्दवस्थानमिति तावत् प्रसिद्धम्। तत् त्रिकोणमेव बिन्दुस्थानं भवति। तत् चतुष्कोणमेव। तत्तु सहस्रकमलान्तर्गतचन्द्रमण्डलमिति बहुधा प्रपञ्चितम्। तच्चतुष्कोणमध्यं बैन्दवस्थानं सुधासरघादिशब्दवाच्यम्। तस्मात् बाह्यत्रिकोणपूजा तरुणीत्रिकोणपूजा च दूरत एव निरस्तेति ध्येयम्। अत एवोक्तं सनत्कुमारसंहितायाम्—

**'बाह्यपूजा न कर्तव्या कर्तव्या बाह्यजातिभिः ।**
**सा क्षुद्रफलदा नृणामैहिकार्थैकसाधनात् ।।**

**बाह्यपूजारताः कौलाः क्षपणाश्च कपालिकाः ।**
**दिगम्बरा ऐतिहासा नामकास्तन्त्रवादिनः ।।**

**अन्तराराधनपरा वैदिका ब्रह्मवादिनः ।**
**जीवन्मुक्ताश्चरन्त्येते त्रिषु लोकेषु सर्वदा ।।'**१२।। इति।

**श्रीभास्कररायप्रणीतभाष्यम्—**

बहिर्यागद्रव्याणि बहिर्यागं द्रव्यप्रतिपत्तिञ्च विधातुं द्वादशीमृचमाह परिस्रुतमिति।

झषो मत्स्यः। पलं मांसम्। झषस्याद्यं परिस्रुतः प्रथमस्योत्तरं द्वितीयमित्यर्थः। तेन झषस्तृतीयः। भक्तानि वटकचणकादिमुद्गात्मकानि नानाविधान्यन्नानि। चतुर्थं योनिपदं कुण्डगोलोद्भवोपलक्षणं तत् पञ्चमम्। योनीरिति बहुवचनन्तु ब्राह्मणक्षत्रियादिकतिपयजातिभेदाभिप्रायम्। तदुपबृंहणं कलाष्टकादिपदेन तन्त्रेषु द्रष्टव्यम्। चकारः पञ्चानां समुच्चयपरः। पलस्य झषोत्तरं पठितस्यापि झषात् पूर्वमाद्यपदेन निवेशान्मकाराणां क्रमो विवक्षितो ध्वन्यते। तेन मुख्यालाभे

प्रतिनिधिभिरर्चनस्य न्यायेन मपञ्चकालाभेऽपि 'नित्यक्रमं प्रत्यवमृष्टिः' इति कल्पसूत्रेण च सिद्धत्वेऽपि पूर्वपूर्वालाभे सति नोत्तरोत्तरस्य मुख्यस्य लाभेऽपि ग्रहणमिति द्योतितम्। प्रथममात्रालाभेऽपि चतुर्थस्य नैवेद्यार्थमावश्यकत्वात्तावन्मात्र-ग्रहणं सम्प्रदायलभ्यम्। आज्यमिति शाखान्तरीयपाठे तु घृतमेवार्थः। तत्र पक्वमित्यर्थेन काकाक्षिगोल-कन्यायेनोभयोर्विशेषणम्। अजसम्बन्धीति व्याख्या तु न युक्ता, तन्त्रे विकारार्थकस्य दर्शनात् सूत्रोक्तानां पञ्चत्वादिना परिसङ्ख्या-पत्तेश्च। परदेवतातर्पणमात्रपर्याप्तमात्रस्य लाभेऽपि न प्रतिनिधिना यागः। **बहिर्यागे स्वात्मीकारस्य प्रतिपत्तित्वेन तल्लोपेऽपि बाधकाभावादित्यादिकन्तु षाष्ठ[1]न्यायसिद्धमूहनीयम्।** सुपरिष्कृतानि दृष्टादृष्टासंस्कारैः संस्कृतानि। ते च पाकादिरूपा लौकिकाः, शापमोचनादिरूपा वैदिकाश्च बहवस्तन्त्रेषु प्रसिद्धाः। 'बह्वल्पं वा स्वगृह्योक्तम्' इति न्यायेन कल्पसूत्रमात्रोक्ता वा। महत्यै देवतायै महादेव्यै निवेदयन् यजन् सुकृती बहिर्यागकर्ता तानि स्वात्मीकृत्य स्वयमपि भक्षयित्वा सिद्धिं यागफलम् एति प्राप्नोति। परस्परसमुच्चितप्रथमादिमपञ्चकवता यागेन महादेवीदेवताकेनेष्टसिद्धिं भावयेदिति विधिपर्यवसानादिप्रकारोऽन्तर्यागवदेव द्रष्टव्यः॥१२॥

## भाषाव्याख्या

बहिर्यागीय द्रव्य, बहिर्याग और द्रव्य की प्रतिपत्ति (आकीर्णकरतानिवर्तक कर्म) के विधान के लिए दूसरी ऋक् को प्रस्तुत करते हैं—**परिस्रुतं झषमाद्यं पलञ्च।**

परिस्रुत्, मांस, मत्स्य, भक्त और स्त्री, इन पाँच वस्तुओं को महादेवी को अर्पित करके पुण्यात्मा बहिर्यागकर्ता पश्चात् स्वयम् स्वीकार करके सिद्धि (निःश्रेयस) को प्राप्त करता है।

श्रीरामानन्दतीर्थ ने 'आद्यम्' का अर्थ 'भक्षणीय पदार्थ' करके 'पलम्' का विशेषण माना है। श्रीभास्करराय 'आदौ भवम् आद्यम्' अर्थ स्वीकार करके प्रथम 'परिस्रुत्' के बाद 'द्वितीय' अर्थ करते हैं। इस तरह 'झष' तीसरे स्थान पर रहेगा। झष का मत्स्य और पल का मांस अर्थ है। 'भक्त' पद से वटक (बड़ा), चना, मूंग आदि से संस्कृत नाना प्रकार के अन्न संगृहीत होते हैं। भक्त चौथा द्रव्य है। कुण्ड-गोल से उत्पन्न का उपलक्षण (सङ्ग्राहक) योनिपद है। 'योनीः', यह बहुवचन ब्राह्मण, क्षत्रिय आदि कुछ जातियों के भेद को लेकर है। लक्षणा से 'योनि' पद स्त्री का बोधक है। इसका उपबृंहण कलाष्टक आदि पद से तन्त्रों में समझना चाहिये। 'पलञ्च' में आया चकार पाँचों द्रव्यों के समुच्चय को कह

---

१. पू.मी. ६.३.२१. इत्यत्र सिद्धोऽयं न्यायः।

रहा है। पञ्च मकारों के क्रम की विवक्षा को कहते हैं—**पलस्य**। 'पल' का पाठ यद्यपि 'झष' के बाद है तथापि 'आद्य' विशेषण के बल से 'झष' के पूर्व निवेश होने के कारण क्रम की विवक्षा ध्वनित हो रही है। विवक्षा के प्रयोजन को इङ्गित करते हैं—**तेन मुख्यालाभे**। क्रम की विवक्षा होने के कारण मुख्य द्रव्य का लाभ न होने पर प्रतिनिधि द्रव्य से पूजन न्यायतः सिद्ध होता है, अतः पञ्च मकारों की प्राप्ति न होने पर भी **'नित्यक्रमं प्रत्यवमृष्टिः'**, इस परशुराम कल्पसूत्र से सिद्ध होने पर भी पूर्व-पूर्व द्रव्य का लाभ न होने पर उत्तर-उत्तर (बाद वाले) मुख्य द्रव्य का लाभ होने पर भी प्रतिनिधि ग्रहण नहीं होता, यह बात प्रकट होती है। केवल प्रथम द्रव्य की प्राप्ति न होने पर भी चतुर्थ द्रव्य अन्न नैवेद्य के लिए आवश्यक है, अतः केवल उसी चतुर्थ द्रव्य को स्वीकार किया जायेगा, यह तथ्य सम्प्रदाय से प्राप्त है। 'आद्यम्' की जगह 'आज्यम्' पाठ यदि किसी शाखा में है तो उसका 'घृत' अर्थ ही है। वहाँ 'पक्वम्' पाठ अर्थतः काकाक्षिगोलकन्याय से दोनों का विशेषण होगा। 'आज्य' की अज (बकरा) से सम्बन्धित व्याख्या उचित नहीं। इसमें हेतु प्रदर्शित करते हैं—**तन्त्रे विकारार्थकस्य**। तन्त्र में विकारार्थक तद्धित दिखायी देता है, अतः आज्य का अजविकार अर्थ ग्रहण करेंगे तो सूत्रोक्त द्रव्यों का पञ्चत्व आदि से वर्जन होने लगेगा। यदि परदेवता की तृप्ति में पर्याप्त द्रव्य प्राप्त हो जाय तो प्रतिनिधि द्रव्य से याग नहीं करना चाहिये, इस न्यायलभ्य अर्थ को ध्वनित करते हैं—**परदेवतातर्पणमात्र**। परदेवता की तृप्ति के लिए ही सारे द्रव्यों का विधान है। यदि कतिपय प्राप्त द्रव्यों से ही तृप्ति हो जा रही हो तो प्रतिनिधि का ग्रहण नहीं होना चाहिये, यह अभिप्राय है। याग में उपयुक्त द्रव्य का उचित स्थानों में यथाविधान सन्निवेश ही आकीर्णकरतानिवर्तक होने के कारण प्रतिपत्तिकर्म कहा जाता है जिसका संयोगवश लोप होने पर भी याग की पूर्णता मानी जाती है, इस न्याय को यहाँ अर्पित द्रव्यों के स्वात्मीकार (प्रसाद के रूप में ग्रहण) में दिखाते हैं—**बहिर्यागे स्वात्मीकारस्य**। बहिर्याग में देवता को समर्पित परिस्रुत् आदि द्रव्यों का स्वात्मीकार प्रतिपत्तिकर्म माना गया है, अतः उसका लोप होने पर भी किसी प्रकार की बाधा नहीं है, इसका ज्ञान पूर्वतन्त्र में षाष्ठ न्याय से कर लेना चाहिये। छठे अध्याय के अन्तिम इक्कीसवें अधिकरण में दर्शपूर्णमासीय व्रीहि द्रव्य को लेकर यह विचार किया गया है कि पुराडाशत्व जाति में ही समर्थ स्विष्टकृत् आदि शेष कार्यों के लिए अपर्याप्त व्रीहि की प्राप्ति होने पर 'नीवार' प्रतिनिधि से याग होना चाहिये कि नहीं? अधिक संख्या में विद्यमान शेष कार्यों का बाध न हो, अतः व्रीहिशास्त्र (वीहिभिर्यजेत) का बाध होना चाहिये। ऐसा पूर्वपक्ष प्राप्त होने पर सिद्धान्त प्रस्तुत है कि नीवार को लेने पर पुरोडाशभाव को प्राप्त व्रीहि के अवयव विकल होने लगेंगे, अतः प्रधान 'आग्नेय' याग का वैगुण्य न हो इसके लिए प्रतिनिधि का ग्रहण नहीं होना चाहिये। शेष कार्यों का आदर न करते हुए व्रीहि से ही पुरोडाश बनाना चाहिये। यहाँ प्रधान याग यदि मुख्य द्रव्य से सम्पन्न हो रहा है तो प्रतिपत्ति कर्म के अनुरोध से प्रतिनिधि का ग्रहण न हो, यह सिद्धान्त है। मन्त्र में आये कतिपय अवशिष्ट पदों का अर्थ करके वाक्यार्थ का निरूपण करते हैं—**सुपरिष्कृतानि दृष्टादृष्टसंस्कारैः संस्कृतानि**। बहिर्यागों का दृष्ट और अदृष्ट संस्कार होना

चाहिये तभी वे हव्य के रूप में प्रतिष्ठित होंगे, यह अभिप्राय है। पाक आदि लौकिक संस्कार दृष्ट प्रयोजन वाले होते हैं तथा तन्त्रों में शापविमोचन आदि बहुत से अलौकिक अदृष्ट संस्कारों का उपदेश है। वेद से ही प्राप्त होने पर अलौकिकत्व स्वीकार किया जाता है। **'बह्वल्पोक्तं वा स्वगृह्योक्तम्'**, इस न्याय से कल्पसूत्रों में ही उक्त संस्कार दृष्ट होते हैं। महादेवी का उक्त द्रव्यों से यजन करने वाला बहिर्यागकर्ता उन द्रव्यों का स्वयम् भक्षण करके यागजन्य फल को प्राप्त करता है। मन्त्रलिङ्ग से बहिर्यागविधि का उन्नयन करते हैं—

**परस्परसमुच्चितप्रथमादिमपञ्चकवता यागेन महादेवीदेवताकेनेष्टसिद्धिं भावयेत्।**

**'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः'** की तरह यहाँ विशिष्टविधि का उन्नयन है। परस्पर समुच्चित (संमिलित) परिस्रुत् आदि पाँच द्रव्यों वाले तथा महादेवी देवता वाले याग से सिद्धि प्राप्त करना चाहिये। यह विधिकल्पना अन्तर्याग के समान है।।१२।।

## श्रीत्रिपुरोपनिषद्

**सृण्येव सितया विश्वचर्षणिः पाशेन प्रतिबध्नात्यभीकान् ।**
**इषुभिः पञ्चभिर्धनुषा च विध्यत्यादिशक्तिररुणा विश्वजन्या ।।१३।।**

**श्रीरामानन्दतीर्थकृतभाष्यम्—**

एवं श्रीदेव्याः पूजाविशेषान् सप्रपञ्चं निरूप्य तस्या इच्छाज्ञानक्रियाशक्तय एव कामक्रोधमनस्तन्मात्ररूपाः पाशाङ्कुशपुण्ड्रेक्षुचापपञ्चकुसुमबाणात्मना परिणताः। ताभिरुपासकान् पालयन्ती तदिरान् ताभिरेव व्यामोहयन्तीव भातीत्याह—

'सृण्येवे' त्यादि। सृण्या = अङ्कुशरूपया, ज्ञानशक्त्येत्यर्थः। विश्वचर्षणीः स्वभक्तजनान् भेदप्रतीकमोहशास्त्रेभ्यो व्यावर्तयन्तीति शेषः। अभीकान् कामुकान् भक्तिहीनान् क्रोधाकारेणाऽङ्कुशेन भेदप्रतिपादकमोहशास्त्रेष्वाकृष्य प्रवर्तयन्तीवेति वाक्यशेषः। पाशेन पाशरूपया ज्ञानशक्त्येत्यर्थः। उपासकान् स्वात्माभिन्नत्वेन प्रतिबध्नन्ती तदितरान् कामुकान् रागस्वरूपेण पाशेन अत्यन्तभेदबुद्ध्युपहितत्वेन प्रतिबध्नाति इत्यर्थः। इषुभिस्तन्मात्रपुष्पबाणैः पञ्चभिः पञ्चसङ्ख्याकैः अरविन्दाऽशोक-चूतनवमल्लिकानीलोत्पलाख्यैः पञ्चतन्मात्ररूपपुष्पशररूपैरिति यावत्। धनुषा विध्यति मनोरूपेक्षुचापात्मिकया क्रियाशक्त्या स्वभक्तान् स्वभिन्नाकारवर्जितान् कुर्वती कामुकान् स्वभिन्नाकारान् मनोरूपेक्षुदण्डेन पञ्चतन्मात्रसायकेन विध्यति विध्यतीवेत्यर्थः। आदिशक्तिः पराशक्तिः। तथा च श्रीवामकेश्वरतन्त्रे—

**'त्रिपुरा परमा शक्तिराद्या जाता महेश्वरी'**। इति।

अरुणा अरुणाख्या। तथा च भगवत्पादाः—

**'जगत् त्रातुं शम्भोर्जयति करुणा काचिदरुणा'** इति।

अरुणवर्णा वा—

**'निजाऽरुणप्रभापूरमज्जद्ब्रह्माण्डमण्डला'**

इति सहस्रनामस्तोत्रे पठितत्वात्। विश्वजन्या विश्वजनयित्री।

**'बह्वीः प्रजाः सृजमानाः'**

इति श्रुतेः। ब्रह्माण्डपुराणे च—

**'सैव निःशेषविश्वानां सवित्री ललितेश्वरी'** इति।

अयं भावः—पाशः स्वात्माऽभेदबन्धनसाधनभूतेच्छाशक्तिस्वरूपः, अङ्कुशः स्वस्वरूपाऽभेददर्शनोपायात्मज्ञानशक्तिमयः, इक्षुचापेषुपञ्चके तु स्वभिन्नाकारवर्जन-साधनभूतक्रियाशक्तिस्वरूपे ज्ञानक्रियाशक्तय एव पाशादिस्वरूपमापन्नाः। ताभिरुपासकान् मोचयन्ती कामुकान् विमोहयन्त्येव भातीति। तथा च चतुःशत्याम्—

**'इच्छाशक्तिमयं पाशमङ्कुशं ज्ञानरूपिणम् ।**
**क्रियाशक्तिमये बाण-धनुषी दधदुज्ज्वलम् ।।'** इति।

सुभगोदयवासनायामपि—

**'देव्याः संवित् ( सु ) सत्तायां भेदोद्दलनहेतुकाः ।**
**आयुधाख्याः पराशक्तिबाणाद्याः पूजयाम्यहम् ।।'** इति।

**'यथा न्यग्रोधबीजस्थशक्तिरूपो महाद्रुमः ।**
**तथा हृदयबीजस्थं जगदेतत् सकारणम् ।।'** इति।।१३।।

**श्रीभास्कररायप्रणीतभाष्यम्—**

देवतायाः सगुणं ध्यानं कृत्वङ्गमुदेष्टुं त्रयोदशीमृचमाह—सृण्येवेति।

सृण्येव सितयेति इत्थम्भूतलक्षणे तृतीया। सितया श्वेतया रजतमय्या सशयोरभेदान्निशितया तीक्ष्णधारया वा सृण्या अङ्कुशेनेवोपलक्षिता विश्वजन्या विश्वं जन्यं यस्यास्सा विश्वजननी अरुणा लौहित्यवती आदिशक्तिः महात्रिपुरसुन्दरी विश्वचर्षणिः प्राणिमात्रस्य शुभाशुभकर्मद्रष्ट्री तथा अभीकान् कामुकान् तृष्णया लौल्येनेह मार्गे प्रवर्तमानान् भ्रष्टान् प्रतिबध्नाति तान् बध्वा धनुषा पञ्चभिरिषुभिः बाणैः विध्यति च। अधः पातयतीति यावत्। तृष्णाहीनान् वैधधिया प्रवर्तमानान् ऊर्ध्वं नयतीति तु विधिसिद्धमेवेति पूनर्नोक्तम्। तदुक्तम्—

**'विधिबुद्ध्यैव सेवेत तृष्णया चेत् स पातकी ।**

**यैरेव पतनं द्रव्यैर्मुक्तिस्तैरेव चोदिता ।।**
**अभीकस्यानभीकस्येत्येवमेते व्यवस्थिताः।।'**

इत्यादि। सृण्येवेति द्विविधा सृणिर्भवति-भर्त्ता च हन्ता चेति यास्कः। इव शब्दस्सर्वत्रान्वितस्सन् सगुणरूपस्य भक्तानुग्रहार्थं कल्पितत्वेन निर्गुणरूपस्यैव पारमार्थिकत्वं व्यञ्जयति ।।१३।।

## भाषाव्याख्या

देवता का सगुण ध्यान क्रतु (याग) का अङ्ग है जिसके उपदेश के लिए ऋग्वेद पुरुष तेरहवीं ऋक् को प्रस्तुत करते हैं—**सृण्येव सितया विश्वचर्षणिः।**

'सृण्येव सितया' में इत्थम्भूतलक्षण में तृतीया विभक्ति है, अतः सित = श्वेत वर्ण वाली रजतनिर्मित या तीक्ष्ण धार वाली सृणि = अङ्कुश से उपलक्षित विश्वजननी का बोध होगा। विश्वं जन्यं कार्यं यस्याः सा विश्वजन्या = जगज्जननी पराम्बा भगवती अरुण (रक्त) वर्ण वाली आदिशक्ति महात्रिपुरसुन्दरी हैं। वे विश्वचर्षणी अर्थात् प्राणिमात्र को उनके शुभ या अशुभ कर्मों की साक्षिणी अर्थात् अन्तर्यामिणी हैं। वे अभीका = कामुक अर्थात् चञ्चलता के कारण इस याग में प्रवर्तमान भ्रष्ट पुरुषों को प्रतिबन्धित करती हैं तथा उन्हें पाँच बाणों और धनुष से वेधती हैं। इसका तात्पर्य लिखते हैं—**अधः पातयतीति यावत्।** पञ्च बाण काम के प्रसिद्ध हैं जिससे सिद्ध होता है कि उन्हें कामासक्त बना कर अधोमार्ग नरक में पटक देती हैं। इसको और सुस्पष्ट करते हैं—**तृष्णाहीनान् वैधधिया प्रवर्तमानान् ऊर्ध्वं नयतीति विधिसिद्धमेवेति पुनर्नोक्तम्।** एषणात्रय से ग्रस्त सांसारिक पुरुषों को रहस्यमय कर्मों में प्रवृत्त होने पर नरक प्रदान करती हैं, इससे अर्थात् सिद्ध हो रहा है कि जो तृष्णा से रहित होकर वैध दृष्टि से उपासना करते हैं उन्हें ऊर्ध्व लोकों को प्रदान करती हैं। अन्यत्र भी कहा गया है—

**'विधिबुद्ध्यैव सेवेत तृष्णया चेत् स पातकी।'**

वेद का विधान है, ऐसा समझ कर ही बहिर्याग में प्रवृत्त होना चाहिये। तृष्णा से प्रवृत्त होने वाला पातकी है। जिन सुरा आदि द्रव्यों से वेद में पतन कहा गया है उन्हीं से मुक्ति का भी उपदेश है। कामुक के लिए पतन और अकामुक साधक के लिए मुक्ति का उपदेश है, यह व्यवस्था समझनी चाहिये। यास्क ने सृणि के दो प्रकारों को प्रकट किया है- भर्ता और हर्ता। एक भरण करता है, तो दूसरा संहार। यथाशास्त्र चलने वालों के लिए भगवती का शस्त्र पोषक है, यह अभिप्राय है।

'इव' शब्द सर्वत्र अन्वित होता हुआ यह प्रकट करता है कि देवता का सगुण-साकार रूप भक्तों के ऊपर कृपा करने के लिए कल्पित है। इससे निर्गुण रूप की पारमार्थिकता द्योतित होती है।।१३।।

# श्रीत्रिपुरोपनिषद्

**भगः शक्तिर्भगवान् काम ईश उमा दातारावेिह सौभगानाम् ।**
**समप्रधानौ समसत्त्वौ समोजौ तयोः शक्तिरजरा विश्वयोनिः ।।१४।।**

**श्रीरामानन्दतीर्थकृतभाष्यम्—**

एवम् इच्छा-ज्ञान-क्रियाशक्तय एव आयुधात्मना परिणता इति प्रतिपाद्य परशिवस्यापि प्रतिपादितोऽर्थः समान इति समप्रधानन्यायादिना द्रढयति-भगः शक्तिरित्यादिना।

भग श्री सौभाग्यलक्ष्मीरित्यर्थः। तथा च श्रुतिः—'आस्ते आसीन-स्योर्ध्वस्तिष्ठतश्च तेन पद्यमानस्य चरति, चरतो भग' इति। स एव शक्तिः, शिवाऽभिन्ना शक्तिः। **'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निरूढाम्'** इति श्रुतेः। ऐश्वर्यादयो वा 'भग' शब्देन कथ्यन्ते।

**'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।**
**ज्ञानवैराग्ययोश्चैवं षण्णां भग इतीरणा ।।'**

इति वचनात्। भगवान्—श्रीमान् समृद्धिमान् उत्पत्त्यादिवेत्ता वा। अत्र श्रुतिस्मृत्यादयः—'अथ कस्मादुच्यते भगवानिति? यः सर्वान् भावानीक्षति आत्मज्ञानं निरीक्षयति योगं गमयति, तस्मादुच्यते भगवानिति। 'ॐ यो वै रुद्रः भगवान्, यच्च ब्रह्मेत्यादि, वाक्यजातम्। 'षडध्वनयनो महादेवो वृषध्वज' इति च।

रामायणं च—

**'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्।**
**वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ।।'**

एवम्भूतो भगवान् काम ईशः—कामेश्वर इत्यर्थः। पदद्वयमुक्तार्थम्। उभा कामेश्वरीकामेश्वरौ। सौभगानां—सौभाग्यानाम्। उभा दातारौ शक्तिशक्तिमतोर-विनाभावादुभयोरपि दातृत्वम्। श्रुतिश्च 'भग एव भगवाँ अस्तु, देवा इति, तस्मै ब्रह्म च ब्रह्मा च। आयुः कीर्तिं प्रजां ददु'रिति। उभयोरभेदं दातृत्वं प्रतिपादयति, तदुभयप्राधान्यमेव विशदयति—'समप्रधानावि' त्यादिना। समप्रधानौ तुल्यप्रकृतिकौ, अभिन्ननिमित्तोपादानत्वेन। यद्यपि उपादानकारणं शक्तिः, निमित्तकारणं शिव इति प्रसिद्धम्, तथापि शिवाऽभिन्ना चेत् सा ब्रह्मविद्या समाना 'सैव देवता सा श्रीविद्येति' श्रुत्युक्तरीत्या शिवशक्त्योरत्यन्ताऽभेदादभिन्ननिमित्तोपादानत्वं

सिद्धम्। प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'। 'सर्वधर्मोपपत्तेश्चे'त्यादिन्यायेनेत्यर्थः। रहस्याम्नाये च—

**'पराख्यायां शिवेहायां सत्यां साऽपि मृता तथा ।**
**अजायतापराणोख्य-बाजाङ्कुर इव प्रिये ।।**

इत्यादिना वीजाङ्कुरन्यायेन शिवयोः समप्राधान्यमुक्तम्। समसत्त्वौ समतत्त्वात्मकौ, उक्तलक्षणादेव।

**'विश्वात्मिकां तदुत्तीर्णां प्रकाशामर्शरूपिणीम् ।**
**परापरमयीं देवीमात्मत्वेन विचार्यताम् ।।'**

इत्यागमोक्त्या च 'समसत्त्वता' सिद्धा। समोजौ सममोजो ययोस्तौ समोजौ समोजसावित्यर्थः। छान्दसत्वादकारान्तत्वम्। 'ओज इन्द्रियबलम्, यश्चाऽऽधारमोजशब्द आधारवाचक' इति भाष्यकारवचनात् श्रीचक्रमभिधीयते। तस्य तदुभयात्मकत्वेन तदाधारत्वात् समोजौ। तयोः शक्तिशक्तिमतोर्मध्ये शक्तिः श्रीदेवी, अजरा अपक्षयरहिता, षड्भावविकारशून्येति यावत्। विश्वयोनिः, विश्वस्य जगतो योनिः उपादानकारणत्वं सम्यगुक्तम्।

एषा चिच्छक्तिः। द्विरूपासङ्कोचविकासभेदात्। जीवात्मतया सङ्कोच-रूपा, बाह्यात्मतया विकासरूपा च। यथोक्तं चिदानन्दवासनायाम्—'विश्वात्मिकां तदुत्तीर्णां प्रकाशामर्शरूपिणीम्। (परापरमयीं देवीमात्मत्वेन विचार्यता'ति।) तथा च ब्रह्माण्डपुराणे—'सैव निःशेषा विश्वानां सवित्री ललितेश्वरी'ति। रहस्योपनषदि च—'यद् दृश्यते तदानन्दयोनिः, तेन जीवति। तदेषाभ्युक्ता पारो वा एष आनन्दः संभोगयोनिः, कामरूपवती, स आनन्दयोनिः, आनन्दो ब्रह्म, ब्रह्मैषा देवी एकानेकप्रपञ्चस्येति स्यादि'ति। आगमश्च—

**'एक एव प्रकाशाख्यः परः कोऽपि महेश्वरः ।**
**यस्य शक्तिर्विमर्शाख्या सा नित्या गीयते बुधैः ।।**

**विमर्शाख्या च देवी सा पञ्चकार्यसमागता ।**
**आकाशानिलसप्तार्चिःसलिलावनिभेदतः ।।**

**एकैकगुणवृत्त्या तु तिथिसङ्ख्यात्वमागता ।।'** इति।

कामकलाध्यानेऽपि रक्तबिन्दोर्जगत्कारणत्वं प्रतिपादितम्—

**'स्फुटितादरुणाद् बिन्दोर्नादब्रह्माङ्कुरो रवोऽव्यक्तः ।**
**तस्माद् गगनसमीरणदहनोदकवर्णसम्भूतिः ।।'** इत्यादिना।

